







TM

New Rasna Spider-man pack!




Orange ☐ Pineapple ☐ Lime ☐ Shahi Gulab ☐ Kala Khatta ☐ Kool Khus ☐ Kesar Elaichi ☐ Masala Soda (Jal Jeera) ☐ Tooti Fruiti ☐ Mango Ripe ☐ Grape Glory

# Refreshing Rasna

11 lovable flavours at a lovable price.

Mudra:A:EAMR:4570

जिज्ञासा –

# भूतकृदन्तविषये पुनश्चिन्तनं किञ्चित्

शिष्यः- श्रीमन्! अहं पूर्वं पृष्टवान् आसं यत् ......।

आचार्यः- तद्विषये पुनरपि प्रष्टव्यम् अस्ति? तथा चेत् अवश्यं पृच्छतु भोः। किमर्थं सङ्कोचः? कदाचित् मम निरूपणे अस्पष्टता आगता स्यात्। अथवा भवता नूतनः सन्देहः प्राप्तः स्यात् अपि। अतः बोधितस्य विषये पुनः सन्देहप्रकटनं न अनुचितम्। निस्सङ्कोचं पृच्छतु।

शि - अस्माभिः 'रामः अगच्छत्' इत्यस्मिन् अर्थे 'रामः गतवान्' इति प्रयोगः सर्वदा क्रियते।

आ - भूतकाले भूतकृदन्तस्य (क्तवतुप्रत्ययान्तस्य) प्रयोगः क्रियते। अत्र अनौचित्यं किमपि नास्ति खलु?

शि - पूर्वम् अहं भवता बोधितः। तथापि तेन तृप्तिः न जाता मम।

आ - कोऽपि सन्देहः इतोऽपि अवशिष्टः। अतः तृप्तिः न दृश्यते। सः सन्देहः कः इति वदतु।

शि - 'रामः गतवान्' इत्यत्र 'गतवान्' इति पदात् 'गमनकर्ता' इत्यर्थः ज्ञायते, न तु क्रियामात्रम्। अतः अगच्छत् इत्यर्थे गतवान् इति प्रयोगः कथं साधुः स्यात्?

आ - अहं पूर्वम् एव उक्तवान् आसं खलु– तयोः शब्दबोधे वैलक्षण्यम् अस्ति इति तु सत्यम् एव इति?

तथापि प्राचीनकालात् अपि तयोः अभेदेन व्यवहारः दृश्यते। गतवान् इत्यस्य विवरणम् अगच्छत् इति पदेन, अगच्छत् इति पदस्य विवरणं च गतवान् इति

पदेन च कुर्वन्ति। क्रियापदस्थाने कृदन्तरूपप्रयोगः तु सर्वैः (कविभिः शास्त्रकारैः चापि) स्वेच्छया कृतः एव।

शि - श्रीमन्! अगच्छत्-गतवान् इत्यनयोः सूक्ष्मः भेदः अस्ति एव। तथापि अगच्छत् इत्यस्य स्थाने गतवान् इति प्रयोगः कथम् आगतः?

आ - 'रामः अगच्छत्' इत्यत्र वक्त्रा अंशद्वयम् वक्तव्यत्वेन इष्टम्। तच्च – कर्तृत्वं, भूतकालविशिष्टं गमनम् (उत्तरदेशसंयोगानुकूलः व्यापारः)। एतत् अंशद्वयं 'रामः गतवान्' इत्यनेन अपि ज्ञायते एव। अतः एव भूतकाले 'गतवान्' इत्यस्य कृदन्तस्य प्रयोगः अपि व्यवहारे आगतः।

शि - श्रीमन्! गतवान् इत्यत्र गमनक्रियाश्रयत्वं द्योत्यते खलु?

आ - पश्यतु। अगच्छत् इत्यत्र, गतवान् इत्यत्र च कर्तृत्वं व्यापारः चेति अंशद्वयं द्योत्यते एव। अगच्छत् इत्यत्र व्यापारः प्रधानः, कर्तृत्वं गौणम्। गतवान् इत्यत्र तु कर्तृत्वं प्रधानं, व्यापारः गौणः। एषः एव तयोः वास्तविकः भेदः। किन्तु गुणप्रधानभावः वैपरीत्येन अपि वक्तुं शक्यते व्याकरणशास्त्रे। एतद्विषये भाष्यकारः वदति– "यथेष्टम् अभिसम्बन्धो भवति। विशेषणविशेष्यभावे कामचारः" इति। अतः अगच्छत् इति स्थले गतवान् इति प्रयोगे कृते व्याकरणदृष्ट्या न कोऽपि दोषः।

शि - श्रीमन्! वस्तुस्थितिः एवं चेत् अपि केचन भूतकृदन्तप्रयोगविषये किमर्थम् अनादरं प्रकटयन्ति?

आ - यदि शैलीदृष्ट्या कश्चित् अनादरं प्रकटयति तर्हि तत् अस्माभिः सोढव्यम्। तिङन्तरूपस्य प्रयोगेण सौन्दर्यम् अधिकम् इति तस्य चिन्तनं भवितुम् अर्हति। किन्तु असाधुत्वं चिन्तयन् कश्चित् अनादरं प्रकटयति चेत् एतावत् वक्तव्यं भवति यत् तेन इतोऽपि ज्ञातव्यम् अस्ति इति। तदस्तु तावत्, गभीरः एषः विषयः भवति नीरसताम् अजनयत् ननु?

शि - न श्रीमन्! एतेन चिन्तनेन नितरां सन्तुष्टः अस्मि अहम्।




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

जीवने विश्वासस्य (आदर्शस्य वा) किं स्थानम्? सामान्यस्य कस्यचित् जीवने अपि तस्य किमपि स्थानम् अस्ति वा?

आम्! सर्वस्य अपि जीवने विश्वासस्य महत्त्वपूर्णं स्थानम् अस्ति। यथा पात्रं विना जलादिद्रवद्रव्याणाम् आकारः न भवति तथैव विश्वासं विना कस्यापि जीवनस्य आकारः एव न भवति।

विश्वासः न केवलं जीवनं रूपयति, अपि तु जीवनम् उन्नयति अपि। विश्वासस्य तु चुम्बकस्य इव विशिष्टा काचित् शक्तिः भवति। सा शक्तिः जीवनम् आकर्षति। सद्विश्वासस्य स्थानं सदा उन्नतम् एव। अतः सहजतया जीवनम् अपि उन्नतिम् आप्नोति। यस्मिन् अस्माभिः विश्वस्यते तस्य विचारस्य औन्नत्यम् उदात्तता वा यावत् भवति तावदेव उन्नतम् उदात्तं वा भवति अस्माकं जीवनम् अपि। विश्वासे अस्माकं भावना वञ्चनारहिता श्रद्धायुक्ता च भवति चेदेव फलम् इति तु न विस्मरणीयम्।

प्राचीनकालात् अपि ज्ञानप्रवाहिकारूपेण स्थितायां संस्कृतभाषायाम् उदात्ताः विचाराः तु अनन्ताः। अत्रत्यैः विचारैः सामान्याः यथा तृप्यन्ति तथैव महाज्ञानिनः अपि तृप्यन्ति एव। विचाराणां वैविध्यात् विभिन्नरुचिमताम् अपि सर्वेषां तृप्तिः जायते। अतः एव प्रायः बहवः वदन्ति– 'संस्कृतिः संस्कृताश्रिता' इति।

सम्पुटः–६ जून्–१९८९ सञ्चिका–३

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# OMEGA Sony *Geometry Box*

Also Available:

- ☐ Omega Glory
- ☐ Omega Liba
- ☐ Omega World Time




***OMEGA** - The ultimate in quality*




**Allied Instruments Pvt. Ltd.**
30-CD, Govt. Industrial Estate,
Kandivli, Bombay - 400 067.
Phone: 6050425, 6050721, 6050849, 6052188
Cable: ROTOFILE Telex: 011-78169 AIPL
Fax: 6052811




Winner of Top Plexconcil Export Award – 1978-79-80-81-82-83-84-85-86-87

Distributors: GREATER BOMBAY: **D. Jagjivandas & Company,** 177, Abdul Rehman Street, Bombay - 400 003. Ph: 326524. MAHARASHTRA: **A. Aalok & Company,** 107, Regal Industrial Estate, Acharya Donde Marg, Sewree (West), Bombay - 400 015. Ph: 4133295/4133215. GUJARAT AND RAJASTHAN: **N. Chimanlal & Co.,** 'Jesmin' Building, Near Firdaus Flats, Khanpur, Ahmedabad - 380 001. Ph: 350198/354579. DELHI, HARYANA, PUNJAB, J. & K. & HIMACHAL PRADESH: **Bharati Traders, C/o. Kripa Ram Sethi & Sons,** 89, Chawri Bazar, Delhi - 110 006. Ph: 262854. KARNATAKA, ANDHRA PRADESH & GOA: **Sanghvi Corporation,** Suresh Bldg., No. 17, 4th Cross, Kalasipalayam, New Extension, Bangalore - 560 002. Ph: 235702. CALCUTTA & WEST BENGAL: **Sanghvi Corporation,** 63, Radha Bazar Street, 2nd Floor, South Wing, Calcutta - 700 001. Ph: 261052. UTTAR PRADESH: **Sanghvi Corporation.** 7-A, Balmiki Marg, Lal Baug, Lucknow - 226 001. Ph: 48301. TAMILNADU: **Sanghvi Corporation.** Baina Complex, 1st Floor, 35, Strotten Muthia Mudaliar Street, Madras - 600 079. Ph: 569304. MADHYA PRADESH, KERALA, BIHAR, ORISSA, RAJASTHAN, ASSAM AND NORTH EAST INDIA: **Sanghvi Corporation,** 109, Regal Industrial Estate, Acharya Donde Marg Sewree (West), Bombay - 400 015. Ph: 4133295/4133215.

# रसवार्ता:



## सूचीशिरसि दशलक्षं रन्ध्राणि!

आंग्लेयाः विज्ञानिनः 'एलेक्ट्रान्बीम्' निर्मितवन्तः सन्ति। एतत्सम्बन्धिन्या प्रक्रियया ब्रिटिषुविज्ञानसर्वस्वस्य (एन्सैक्लोपीडिया ब्रिटानिका) २९ सम्पुटाः अपि पत्रसूच्याः शिरसः यावान् आकारः तावति स्थले सङ्ग्रहीतुं शक्याः। अङ्कन्या लिखितायां लघुरेखायां दशलक्षम् अक्षराणि, एतया प्रक्रियया लेखितुं शक्याः। एतया एव प्रक्रियया सूचीशिरसि दशलक्षं रन्ध्राणि अपि कर्तुं शक्यानि!

## मेधावी बालकः

वेलूरीयः बालमुरुळि अम्बटे ११ वर्षीयः बालकः। किन्तु सः स्वमेधाशक्त्या अमेरिकादेशीयान् विज्ञानिनः अपि आश्चर्यचकितान् कृतवान् अस्ति। एषः मेधावी बालः त्रिवर्षात्मके वयसि एव आंग्लभाषया निरर्गलं वक्तुं लेखितुं च आरब्धवान्। चतुर्थे वयसि गुणनं भाजनं च अभ्यस्य बेसिक् क्याल्कुलस्पठनम् आरब्धवान्!





## विमान-रैलूयानयोः स्पर्धा!

'ट्रान्स्रासिड्' चुम्बकशक्त्या चलत् रैलयानं विमानेन सह स्पर्धां कर्तुम् अर्हति। इतः परं हनोवर्-होम्बर्ग्नगरयोः मध्ये विशेषतः निर्मितेन पट्टिकामार्गेण एतस्य रैलूयानस्य गमनागमनम् आरप्स्यते।

## थायूल्याण्ड्देशस्य प्राचीनराजधानी

२५ वर्षेभ्यः प्रचलतः उत्खननात् संशोधनाच्च थायूल्याण्ड्देशस्य प्राचीनराजधानी प्रकाशं गता अस्ति। तदुपरि स्थितम् घोरम् अरण्यं मृत्तिकां च अपसार्य ७०० वर्षेभ्यः पूर्वं निर्मितम् एतं सुभोतायूनामकं नगरम् भग्नावशेषमात्रम् अन्विष्टवन्तः सन्ति विज्ञानिनः। अत्र १९३ बौद्धालयाः, खाताः, इष्टिकानिर्मितानि वसतिस्थानानि च प्राप्तानि सन्ति।



# सत्यस्य मूल्यम्

शिवपुरस्य सूर्यनारायणनामकस्य गृहं कदाचित् मध्यरात्रसमये चोरः प्रविष्टवान्। सः छुरिकां प्रदर्शयन् सूर्यनारायणं तत्पत्नीं च उक्तवान्– "सुवर्णाभरणानि धनं च कुत्र स्थापितानि इति निर्वञ्चनया वदन्तु। अन्यथा भवन्तौ प्राणैः वियुक्तौ भवतः" इति।

"अस्माकं गृहे आभरणानि धनं वा न सन्ति एव" इति उक्तवन्तौ तौ दम्पती।

तदा तयोः दशवर्षीयः पुत्रः– "एतौ सत्यं न वदतः। अहं सत्यम् एव वदामि, शृणोतु। तत्र दृश्यमानायां पेटिकायां विंशतिसुवर्णनाणकानि सन्ति। एतावत् एव मम गृहस्य ऐश्वर्यम्" इति उक्त्वा चोराय पेटिकां प्रदर्शितवान्।

चोरः ततः सुवर्णनाणकानि स्वीकृतवान्। अनन्तरं समग्रे गृहे सम्यक् अन्वेषणम् अपि कृतवान्। किन्तु तेन अन्यत् किमपि न प्राप्तम्। बालकस्य वचनं सत्यम् एव आसीत्। अतः सः बालकं पृष्टवान्– "भोः, भवान् मातापितरौ इव असत्यं किमर्थं न उक्तवान्?" इति।

"तौ सत्यस्य असत्यस्य च मूल्यं न जानीतः। किन्तु अहं सम्यक् जानामि। अतः सत्यम् उक्तवान्" इति धैर्येण उत्तरं दत्तवान् बालकः।

"वदतु तर्हि, सत्यस्य किं मूल्यम्? असत्यस्य च किं मूल्यम्?" इति पृष्टवान् चोरः।

"सत्यस्य मूल्यम् एतत्सन्दर्भे मातापित्रोः प्राणाः। असत्यस्य च मूल्यं विंशतिसुवर्णनाणकानि। अतः सत्यम् उक्त्वा अहम् मातापित्रोः प्राणान् प्राप्तवान्। असत्यम् उक्तं चेत् भवान् तौ अमारयिष्यत् तदा विशंतिसुवर्णनाणकानि केवलं शिष्यन्ते स्म" इति उक्तवान् बालकः।

बालकस्य चातुर्ययुक्तेन वचनेन सन्तुष्टः चोरः तानि विंशतिसुवर्णनाणकानि अपि बालाय दत्त्वा ततः निर्गतवान्।





# पिशाचसाहाय्यम्

बहुपूर्वं मङ्गलापुरं नाम कश्चन ग्रामः आसीत्। तस्य ग्रामस्य पार्श्वे कश्चन विशालः वटवृक्षः आसीत्। तस्मिन् वटवृक्षे उभौ पिशाचौ निवसतः। तौ तु नितरां परोपकारशीलौ। अतः एतौ इतरैः पिशाचैः सह अमिलन्तौ पृथक् एव निवसतः।

कदाचित् तौ मध्याह्नसमये वृक्षस्य उपरि उपविश्य तापवशात् निद्रामग्नौ आस्ताम्। तत्मसये कश्चन शब्दः ताभ्यां श्रुतः। एतौ पिशाचौ जागरूकतां प्राप्य शब्दस्य दिशि दृष्टिं प्रसारितवन्तौ।

कश्चनः दृढकायः पुरुषः तयोः आश्रयभूतं वटवृक्षम् आरूढवान्। सः धनस्यूतं गृहीतवान् आसीत्। धनस्यूतं वृक्षस्य कोटरे पातयित्वा सः अवतीर्य गन्तुम् उद्युक्तः।

एतत् धनं कुतश्चित् चौर्येण सम्पादितम् इति तौ पिशाचौ ज्ञातवन्तौ। झटिति तौ अपि वृक्षात् अवतीर्य तं पुरुषम् अनुसृतवन्तौ।

सः साक्षात् धनिकस्य कनकेन्द्रस्य गृहं प्रविष्टवान्। पिशाचौ अपि अदृश्यरूपेण अन्तः गत्वा अट्टे उपविष्टवन्तौ।

अन्तः आगतं तं पुरुषं कनकेन्द्रः पृष्टवान्– "अये भीम! धनस्यूतः कश्चन न दृश्यते। भवान् कुत्रापि दृष्टवान् वा?" इति।

"हा हन्त! समग्रः धनस्यूतः एव न दृश्यते! आश्चर्यकरम् एतत्। कार्यव्यग्रः भवान् वामहस्तेन कुत्रापि स्थापितवान् स्यात्। मया तु कुत्रापि धनस्यूतः न दृष्टः" इति वदन् भीमः अपि धनस्यूतस्य अन्वेषणम् आरब्धवान्।

सर्वत्र अन्वेषणं कृत्वा असाफल्येन खिन्नः कनकेन्द्रः उक्तवान्– "ह्यः वेङ्कटाचलः नगरे मिलितः। धनस्यूतं मम हस्ते स्थापयित्वा– 'आधिरूपेण स्थापितं आभरणं श्वः आगत्य नेष्यामि' इति उक्तवान्। अद्य

"अनामिका"



सद्यः एव सः आगत्य आभरणं पृच्छति। किन्तु एतावता तेन दत्तः धनस्यूतः एव अदृश्यतां गतः। कथम् एतत्?" इति।

"श्रीमन्! यदा सः भवते धनस्यूतं यच्छन् आसीत् तदा तत्र कोऽपि आसीत् वा?" इति पृष्टवान् भीमः।

"कोऽपि न आसीत्" इति उक्तवान् कनकेन्द्रः।

"तर्हि भीतिः चिन्ता वा किमर्थम्? धनस्यूतः न दत्तः एव इति धाष्ट्र्येन वदतु। सः एतत् निराकृत्य विवादं करोति चेत् अग्रिमं कर्तव्यम् अहं पश्यामि" इति सूचितवान् भीमः।

एतत् एव युक्तम् इति आलोचितवान् कनकेन्द्रः। तावता वेङ्कटाचलः तत्र आगत्य– "दातव्यं दत्तं खलु मया? कृपया मम आभरणानि प्रत्यर्पयतु" इति उक्तवान्।

"अये! किं वदति भवान्? दातव्यं दत्तम् इति? कदा कस्मै दत्तम्?" इति कोपेन पृष्टवान् कनकेन्द्रः।

दिग्भ्रान्तः वेङ्कटाचलः पूर्वतनदिने नगरे दत्तं धनस्यूतं स्मारितवान्।

"भोः, किं वदति भवान्? मां मूर्खं मन्यते वा भवान्? अथवा विनोदार्थं किमपि वदति? एतादृशं मह्यं सर्वथा न रोचते। धनं दत्त्वा आभरणानि नेतुम् अर्हति भवान्" इति उक्तवान् कनकेन्द्रः।

कनकेन्द्रस्य एतादृशं व्यवहारं दृष्ट्वा किं करणीयम् इति न ज्ञातवान् वेङ्कटाचलः। "दरिद्रः अहम् एवं न वञ्चनीयः" इति सकरुणं प्रार्थितवान् सः। कनकेन्द्रस्तु तस्य वचनं निराकुर्वन् तं भीमद्वारा गृहात् निष्कासितवान्। वेङ्कटाचलः अश्रूणि स्रावयन् चिन्ताभारेण ततः निर्गतवान्। तौ पिशाचौ तम् अनुसृतवन्तौ।

गृहं प्रत्यागतं वेङ्कटाचलं तस्य पत्नी 'आभरणानि कुत्र?' इति पृष्टवती। वेङ्कटाचलः अश्रूणि स्रावयन् कनकेन्द्रेण कृतां वञ्चनाम् उक्तवान्। "ह्यः रामचन्द्रेण यत् धनं दत्तम् आसीत् तत् दुष्टेन कनकेन्द्रपिशाचेन वञ्चनया स्वायत्तीकृतम्। अद्य रामचन्द्रः भूसम्बन्धि ऋणव्यवहारपत्रं नेतुम् आगच्छति। किं करणीयम् इति न

जानामि" इति खेदं प्रकटितवान्।

तदा तस्य पत्नी उक्तवती– "किम् अन्यत् कर्तुं शक्यते? अन्येन वञ्चिताः वयम् अपि अन्यं वञ्चयामः चेत् कः दोषः? रामचन्द्रेण धनं दत्तम् इत्यत्र साक्षी कोऽपि न आसीत् खलु?" इति।

यदा रामचन्द्रः आगतवान् तदा वेङ्कटाचलः हसन् पृष्टवान्– "रामचन्द्रवर्य! ऋणव्यवहारपत्रं लिखित्वा दत्त्वा नीतेन धनेन पुत्र्याः विवाहं यथानिश्चयं कृतवान् खलु? एतदर्थम् अन्यतः किमपि ऋणं स्वीकृतवान् वा?" इति।

"अन्यतः ऋणं किं, भवता दत्तस्य ऋणस्य धनम् अपि न उपयुक्तम्। वरपक्षीयाः तथा उदारतया व्यवहृतवन्तः। अतः एव खलु अहं ह्यः भवते धनं दातुं शक्तवान्? ऋणव्यवहारपत्रं नेतुम् इदानीम् आगतवान् अस्मि" इति उक्तवान् रामचन्द्रः।

आश्चर्यं प्रकटयन् वेङ्कटाचलः– "ह्यः एव दत्तम्? कुत्र? मम अनुपस्थितौ गृहे दत्तं वा? मम पत्नी मां न उक्तवती एव। भोः, अत्र शृणोतु...." इति यावत् पत्नीम् आह्वातुम् उद्युक्तः तावता रामचन्द्रः उक्तवान्– "गृहिण्याः हस्ते न, भवतः हस्ते एव दत्तवान् खलु?" इति।

तदा वेङ्कटाचलः दृढस्वरेण– "भोः रामचन्द्र! भवान् एतादृशः विस्मरणशीलः इति अद्यैव ज्ञातवान् अहम्। ह्यः कस्मै धनं दत्तम् इति शान्तः सन् स्मरतु। अविलम्बेन एव धनं दत्त्वा ऋणव्यवहारपत्रं नयतु च"





इति उक्तवान्।

रामचन्द्रः प्रतिवचनं किमपि दातुम् अशक्नुवन् अश्रूणि स्रावयन् ततः निर्गतवान्।

पिशाचौ एतत्सर्वं दृष्टवन्तौ एव। रामचन्द्रस्य साहाय्यं कृत्वा कनकेन्द्र-वेङ्कटाचलयोः अव्यवहारः प्रकटीकरणीयः इति तौ निश्चितवन्तौ। अतः तौ धनिकवेषं धृत्वा रामचन्द्रस्य अभिमुखं गत्वा 'चिन्तायाः किं कारणम्?' इति पृष्टवन्तौ। रामचन्द्रः आत्मनः दुरवस्थां विस्तरेण निवेदितवान्।

तदा पिशाचौ मायया एकं धनस्यूतं सृष्ट्वा तं रामचन्द्रस्य हस्ते स्थापयन्तौ अग्रे किं करणीयम् इति तं सम्यक् सूचितवन्तौ।

रामचन्द्रः प्रतिगत्य वेङ्कटाचलस्य गृहस्य द्वारम् अङ्गुल्या ताडितवान्। बहिः आगतः वेङ्कटाचलः– "पुनः आगमनस्य किं कारणम्?" इति पृष्टवान्।

"पश्यतु भोः, मम विस्मरणशीलताम्। मार्गे जलं पातुं गतः अहं तत्रैव भवते दातव्यं धनस्यूतं स्थापयित्वा आगतवान् आसम्। एतत् स्वीकृत्य ऋणव्यवहारपत्रं प्रत्यर्पयतु" इति उक्तवान् रामचन्द्रः।

वेङ्कटाचलः सन्तोषेण तत् धनं स्वीकृत्य ऋणव्यवहारपत्रं तस्मै दत्तवान्। रामचन्द्रः कृतज्ञतां प्रकटयन् ततः निर्गतवान्।

तस्य निर्गमनानन्तरं वेङ्कटाचलस्य पत्नी पतिम् उक्तवती– "भवान् अविलम्बेन गत्वा एतत् कनकेन्द्राय दत्त्वा आधिरूपेण स्थापितानि आभरणानि प्रत्यानयतु" इति।

वेङ्कटाचलः कनकेन्द्रस्य गृहं गत्वा धनं दत्त्वा स्वकीयानि आभरणानि प्रतिस्वीकृत्य गृहं प्रत्यागतवान्।

धनस्यूतं स्वीकृत्य स्वप्रकोष्ठं गन्तुं कनकेन्द्रः यावत् उद्युक्तः तावता उभौ रक्षकभटौ आगत्य– "यथास्थितं भवता न्यायालयं प्रति आगन्तव्यम्" इति सूचितवन्तौ।

कनकेन्द्रः आश्चर्यम् अनुभवन् भीमेन सह तौ भटौ अनुसृतवान्।

न्यायालये न्यायाधिकारिणः पार्श्वे धनिकवेषेण स्थितौ पिशाचौ अपि उपविष्टौ

आस्ताम्।

न्यायाधिकारी कनकेन्द्रं दृष्ट्वा पृष्टवान्– "किं भोः, एतयोः धनं सहस्रं रूप्यकाणि भवता अपहृतानि इति श्रूयते। किम् एतत् सत्यम्?" इति।

"किम् एतत् असम्बद्धम्? इतः पूर्वम् एतौ मया कदापि न दृष्टौ एव!" इति उद्गारं प्रकटितवान् कनकेन्द्रः।

पिशाचौ कनकेन्द्रस्य कटिप्रदेशे लम्बमानं धनस्यूतं प्रदर्शयन्तौ न्यायाधिकारिणम् उक्तवन्तौ– "तत्र पश्यतु। स च धनस्यूतः आवयोः एव" इति।

"एतत् तु सर्वथा असत्यम्। आधिव्यवहारेण प्राप्तं धनम् एतत्। कथं भवतोः भवितुम् अर्हति?" इति प्रतिरोधं प्रदर्शितवान् कनकेन्द्रः।

"न्यायालये वचनं निष्प्रयोजकम्। स्यूतस्थस्य एकैकस्य रूप्यकस्य उपरि अपि वटवृक्षस्य मुद्रा अस्ति। सा मुद्रा एव प्रमाणीकरोति यत् तत् धनम् आवयोः एव इति" इति उक्तवन्तौ पिशाचौ।

न्यायाधिकारी स्यूतस्थानि रूप्यकाणि परीक्षितवान्। तेषु सर्वेषु नाणकेषु वटवृक्षमुद्रा आसीत् एव। अतः सः कोपेन कनकेन्द्रम् उक्तवान्– "एतावता भवतः वञ्चना, असत्यकथनं च प्रमाणितम् अभवत्" इति।

तदा कनकेन्द्रः भीतिं प्रकटयन्– "एतत् मया न चोरितम्। वेङ्कटाचलेन दत्तम् एतत्" इति सदैन्यम् उक्तवान्। वेङ्कटाचलः न्यायालयम् आनायितः। सः



उक्तवान् यत् एतत् धनं मया रामचन्द्रात् प्राप्तम् इति। रामचन्द्रोऽपि न्यायालयम् आनायितः।

रामचन्द्रः तौ धनिकवेषधारिणौ पिशाचौ प्रदर्शयन् उक्तवान्– "वेङ्कटाचलः माम् असत्यकथनेन वञ्चितवान्। तदा दुःखितं मां सान्त्वयन्तौ एतौ महात्मानौ महयं तं धनस्यूतं दत्तवन्तौ" इति।

न्यायाधिकारिणा पृष्टः वेङ्कटाचलः आत्मना कृतां वञ्चनाम् अङ्गीकृत्य कनकेन्द्रकृतां वञ्चनां श्रावितवान्।

इदानीं भीतः कनकेन्द्रः अपि आत्मना कृतां वञ्चनाम् अङ्गीकुर्वन्– "मया मम सेवकस्य भीमस्य वचनस्य अनुसारम् एवं कृतम्" इति उक्तवान्।

'एवं तर्हि कुटिलोपायं सूचितवान् भीमः एव धनस्यूतस्य अपहारकः' इति तर्कितवान् न्यायाधिकारी।

सः भीमं तीक्ष्णदृष्ट्या पश्यन्– "अये भीम! रहस्यरूपेण चौर्यं कृतं चेत् केनापि न ज्ञायते इति आसीत् खलु भवतः तर्कः? किं भोः चोर! सत्यं वदति, उत ..." इति भायितवान्।

'इतः परं गोपनेन किमपि प्रयोजनं न भवेत्' इति आलोच्य भीमः दैन्यं प्रदर्शयन् क्षमां प्रार्थयन् चौर्यम् अङ्गीकृतवान्। तस्य निर्देशस्य अनुगुणं भटाः अरण्यं गत्वा वृक्षकोटरतः धनम् आनीतवन्तः।

न्यायाधिकारी भीमस्य, कनकेन्द्रस्य, वेङ्कटाचलस्य च योग्यं दण्डनम् आदिश्य पिशाचौ पश्यन् पृष्टवान्– "निरपराधिनः साहाय्यं कृतम्। वञ्चकाः अपि सूचिताः। तदस्तु तावत्, एतत्सर्वम् एवं प्रवृत्तम् इति कथं ज्ञातं भवद्भ्याम्?" इति।

"आवयोः वास्तविकं स्वरूपं निवेदयावः चेत् भवन्तः सर्वे भीताः भवेयुः" इति हसन्तौ तौ पिशाचौ किञ्चित् अग्रे गत्वा अदृश्यतां प्राप्य अरण्यं गतवन्तौ।

वटवृक्षमुद्रायुक्तानि तानि नाणकानि व्यावहारिकाणि न इत्येतम् अंशं जानन् न्यायाधिकारी मनसा हसितवान्।





# रागद्वेषौ

कमलनाथः नाम युवकः सङ्गीते नितराम् आसक्तः। सः स्वशक्त्यनुसारं सङ्गीतसाधनानि सम्पाद्य सदा सङ्गीताभ्यासं करोति स्म।

एकदा कमलनाथः नद्यां स्नात्वा प्रत्यागच्छन् आसीत्। मार्गे तेन कश्चन वेणुः प्राप्तः। सन्तुष्टः कमलनाथः तद्द्वारा वेणुवादनाभ्यासम् आरब्धवान्।

सदा वेणुवादनपूर्वकं समयं यापयन्तं पुत्रं दृष्ट्वा कदाचित् मातापितरौ तं निन्दितवन्तौ। तदा कमलनाथः तौ उद्दिश्य– "सङ्गीतं मम षष्ठः प्राणः इव अस्ति। भवन्तौ यावद् वदतः चेदपि अहम् एतम् अभ्यासं न परित्यजामि। वृथा निन्दनं मास्तु" इति दृढस्वरेण उक्तवान्।

"भवान् सङ्गीताभ्यासं करोति चेत् तत् अस्माकम् अपि अनुमतम् एव। किन्तु क्रमः तु एषः न। गुरुमुखात् शास्त्रोक्तक्रमेण अध्येतव्यं तत्" इति बोधितवन्तौ मातापितरौ।

एतत् वचनं युक्तम् इति अङ्गीकृतवान् कमलनाथः। किन्तु तस्मिन् ग्रामे सङ्गीतं पाठयितुं समर्थः पण्डितः कोऽपि न आसीत्। चपलः नाम कश्चित् नगरं गत्वा किञ्चित् सङ्गीताभ्यासं कृत्वा आगतवान् आसीत्। कमलनाथः तस्य समीपं गत्वा सङ्गीताभ्यासस्य अभिलाषं निवेदितवान्।

चपलः स्वभावेन न सज्जनः। अन्यस्य उन्नतिं कदापि न सहते सः। कमलनाथस्य वचनं श्रुत्वा कृतकसन्तोषं प्रकटयन् सः उक्तवान्– "मया यत् अधीतं तत् अन्यः पाठनीयः इति मम बहोः कालतः इच्छा आसीत्। योग्यः शिष्यः भवान् प्राप्तः मया। भवदीयं सङ्गीतज्ञानं सर्वप्रथमं परीक्षणीयं मया। अतः तत् प्रदर्शयतु तावत्" इति।

कमलनाथः चपलस्य पुरतः कांश्चन निमेषान् यावत् वेणुवादनं कृतवान्।

एतत् वेणुवादनं श्रुत्वा चपलः आश्चर्यचकितः लज्जितः च। यतः गुरुमुखात् तेन एतद्विषये किञ्चित् अधीतम् आसीत् चेदपि कमलनाथस्य यावत् प्रावीण्यं तावत् तस्य न आसीत्। अतः सः असूयया उक्तवान्– "अलं कमलनाथ! वेणुवादनेन अलम्। अपस्वरेण वादयन् अस्ति भवान्। सङ्गीताभ्यासार्थम् अर्हता एव नास्ति भवतः। भवादृशं पाठयामि चेत् मम गौरवम् अपगच्छेत्" इति।

एतत् श्रुतवतः कमलनाथस्य शरीरे कोपाग्निः असमाधानं च व्याप्तम्। सः खेदेन गृहम् आगत्य वेणुं मातुः हस्ते दत्त्वा उक्तवान्– "अम्ब! एतत् अग्नौ स्थापयतु। इतः परं अहं सङ्गीतं न स्मरिष्यामि" इति।

"किं प्रवृत्तं भोः?" इति माता आतङ्केन पृष्टवती। कमलनाथः अश्रूणि स्रावयन् सर्वम् उक्तवान्। तदा माता उक्तवती– "चपलः सदा असूयापरः। तादृशस्य वचनं श्रुत्वा सङ्गीताभ्यासं परित्यक्तुम् इच्छति खलु भवान्? किम् एतत् उचितम्?" इति।

"चपलः यत् असूयां प्रदर्शितवान् तेनैव कारणेन मया सङ्गीताभ्यासः परित्यक्तः इत्येतं विषयं सर्वे यथा जानीयुः तथा करोमि। तदा सर्वे तं निन्दन्ति। तदा एव मम मनःसमाधानम्। अतः सङ्गीताभ्यासः मास्तु मम" इति कोपेन उक्तवान् कमलनाथः।

एतत् श्रुत्वा तत्रैव स्थितः कमलनाथस्य पिता उक्तवान्– "अस्तु भोः। भवान् यथा इच्छति तथैव करोतु। सङ्गीतविषयकस्य अनुरागस्य अपेक्षया अपि चपलविषयकः द्वेषः एव श्रेष्ठः इति भवान् भावितवान्। एतादृशे सन्दर्भे सङ्गीतत्यागः एव श्रेयस्करः। तथैव करोतु" इति।

पितुः वचनं श्रुतवति कमलनाथे विवेकः उदितः। सः वेणुं स्वीकृत्य उत्तमगुरोः समीपं गत्वा ततः विद्यां गृह्णन् असदृशं पाण्डित्यं सम्पादितवान्।





# पञ्च प्रश्नाः

## (५)

चत्वारि विजयसोपानानि आरुह्य धीरसिंहः पञ्चमं प्रश्नं ज्ञातुम् अन्तःपुरं गतवान्। आगतं तम् उक्तवती राजकुमारी सुलोचना – "राजकुमार! इतः ईशान्यदिशि शब्दभेदी नाम पर्वतः अस्ति। तस्य पर्वतस्य किं वैशिष्ट्यम्? पर्वतस्य अपरस्मिन् पार्श्वे स्थितस्य नगरस्य नाम किम्? एतत्सर्वं ज्ञात्वा आगत्य वक्तव्यं भवता" इति।

धीरसिंहः मासत्रयस्य अवधिं सम्प्रार्थ्य अश्वम् आरुह्य ईशान्यदिशि प्रयाणम् आरब्धवान्। नदीः, पर्वतान् च अतिक्रम्य गच्छन् सः अष्टमे दिने एकं गहनारण्यं प्राप्तवान्।

सः च मध्याह्नकालः आसीत्। अतः अश्वात् अवतीर्य सः अश्वं वृक्षे बद्ध्वा वृक्षच्छायायाम् उपविष्टवान्।

तदा अकस्मात् पक्षिणां कोलाहलः श्रुतः। पशवः आक्रोशनैः वने व्याकुलताम् उत्पादयन्तः इतस्ततः धावन्ति स्म। दूरे श्रूयमाणः ध्वनिः क्रमशः समीपम् आगतः।

धीरसिंहः झटिति वृक्षम् आरुह्य यतः ध्वनिः श्रूयते तस्यां दृष्टिं प्रसारितवान्। तत्रत्यस्य दृश्यस्य दर्शनेन सः क्षणकालं स्तब्धः। हरिणाः, गजाः, व्याघ्राः, शृगालाः, वृकाः, भल्लूकाः इत्यादयः वन्यमृगाः भयात् आक्रन्दनं कुर्वन्तः धावन्ति। दीर्घैः पादैः,



दीर्घेण पुच्छेन, क्रूराभ्यां नेत्राभ्यां च युक्तः विलक्षणः घोरः कश्चन मृगः एतं वन्यमृगसमूहम् अनुधावति स्म।

द्वित्राणां क्षणानाम् अनन्तरं वन्यमृगाः धीरससिंहेन आरूढं वृक्षम् अतिक्रम्य अग्रे गतवन्तः। सः विलक्षणः मृगः वृक्षम् आरुह्य स्थितं धीरसिंहम् अपश्यत् एव। झटिति धीरसिंहस्य उपरि आक्रमणम् अकरोत्। धीरसिंहः खड्गम् आकृष्य तेन तं मृगं बलेन ताडितवान्। एतावता अन्यः मृगः चेत् मृतः भवेत्, किन्तु एषः किञ्चिद्दूरे अपतत्, तावदेव।

धीरसिंहः वृक्षात् अधः आगत्य विलक्षणमृगेण सह घोरं युद्धं कृतवान्। एतस्मिन् युद्धे धीरसिंहस्य खड्गः तस्य मृगस्य उदरविदारणम् अकरोत्। तदा सः मृगः दिशः बधिरीकुर्वन् आक्रन्दनपूर्वकं प्राणान् परित्यज्य अधः अपतत्। धीरसिंहः तस्य दंष्ट्राः नखान् च कर्तयित्वा स्वसमीपे स्थापितवान्। अश्वम् आरुह्य प्रयाणम् अनुवर्तितवान् च।

अनन्तरदिने सायङ्काले सः किञ्चन नगरं प्राप्तवान्। तच्च नगरं परमरमणीयम् आसीत्। उन्नतैः प्रासादैः, विशालैः उद्यानैः च नितरां शोभते स्म तत्। किन्तु नगरे मनुष्यसञ्चारः सर्वथा न दृश्यते स्म। आश्चर्यम् अनुभवन् धीरसिंहः राजभवनम् उद्दिश्य गतवान्। तावता कश्चन भटः तस्य समीपम् आगत्य – "महाराजः भवन्तम् अन्तः आगन्तुं सूचितवान् अस्ति" इति उक्त्वा तम् अन्तः नीतवान्।

अश्वं द्वारसमीपे परित्यज्य धीरसिंहः अन्तः गतवान्। तत्र राजा चिन्ताक्रान्तः सन् उपविष्टवान् आसीत्। सः धीरसिंहं दृष्ट्वा उक्तवान्– "भोः, भवान् कश्चन परदेशीयः। अतः मम राज्यस्य दारुणां परिस्थितिं न जानाति भवान्। मम राज्यं सम्पदा पूर्णम् अस्ति। किन्तु किं तेन? प्रजाः सुखशान्तिहीनाः सन्ति। अत्र कारणं समीपस्थे अरण्ये स्थितः विलक्षणः मृगः। सः तदा तदा नगरस्य उपरि आक्रमणं करोति। सम्मुखम् आगतं मानवं पशुं वा निर्दयं मारयन् कांश्चन खादति। तस्य बन्धनं मारणं वा



सर्वथा असाध्यम्। अतः भीताः जनाः राजधानीं परित्यज्य गतवन्तः। केचन स्थिताः अपि गृहात् बहिः न आगच्छन्ति। भवता दृष्टं खलु? अस्माकं नगरम् इदानीं मरुभूमिसदृशं जातम्" इति।

"भवतः नगरस्य स्थितिः दृष्टा मया। इतः परम् एतादृशी स्थितिः न भविष्यति। यतः सः विलक्षणः मृगः मया ह्यः एव मारितः" इति वदन् धीरसिंहः तस्य मृगस्य नखान् दंष्ट्राः च प्रदर्शितवान्।

राजा तत्सर्वं दृष्ट्वा अत्याश्चर्यं प्रकटयन् – "हा हन्त! इदानीं निरातङ्कं श्वसिमि अहम्। मम प्रजानां प्राणाः रक्षिताः भवता। मृगमारणवार्ताम् अद्यैव डिण्डिमघोषपूर्वकं प्रसार्य प्रजाः प्रत्यानेष्यामि। भवता कृतः उपकारः आजीवं स्मरणयोग्यः। अस्य प्रत्युपकाररूपेण किं साहाय्यं करोमि अहम्? निस्सङ्कोचं प्रार्थयतु" इति उक्तवान्।

"अहं शब्दभेदिपर्वतस्य रहस्यं ज्ञातुम् इच्छन् आगतवान् अस्मि। तत्पर्वतं प्रति गमनमार्गं भवान् जानाति चेत् वदतु। तावता अलम्" इति उक्तवान् धीरसिंहः।

"स च पर्वतः इतः दशयोजनदूरे अस्ति। पर्वतपार्श्वे एव शब्दभेदिनगरम् अपि अस्ति। दिनत्रयं यावत् अत्र स्थित्वा अस्माकम् आतिथ्यं स्वीकृत्य इतः गन्तुम् अर्हति भवान्" इति उक्तवान् राजा।

धीरसिंहः आग्रहपूर्वकम् उक्तं महाराजस्य एतत् वचनम् अङ्गीकृत्य दिनत्रयं तस्मिन् नगरे स्थितवान्। अनन्तरं महाराजेन प्रेषिताभ्यां भटाभ्यां सह ततः प्रस्थितवान्।

ते दीर्घप्रयाणानन्तरं शब्दभेदिनगरस्य समीपं गतवन्तः। नगरस्य उत्तरदिशि उन्नतः पर्वतः दृश्यते। स च पर्वतः गहनैः वृक्षसमूहैः आवृतः आसीत्। पर्वतविषये वार्तां सङ्ग्रहीतुम् इच्छन् धीरसिंहः नगरे कस्याञ्चित् धर्मशालायां स्थितवान्। तत्र सः बहूनां परिचयं प्राप्तवान्। केषाञ्चित् स्नेहम् अपि सम्पादितवान्। वीरवर्मा नाम युवकः तु तस्य आत्मीयः जातः।

कदाचित् धीरसिंहः राजमार्गेण गच्छन् आसीत्। तदा 'आगच्छतु, आगच्छतु' इति कुतश्चित् आह्वानं श्रुतम्। तावता आपणे



उपविष्टः कश्चन तरुणः झटिति उत्थाय उन्मत्तः इव पर्वतस्य दिशि धावितवान्। तस्य ग्रहणार्थं धीरसिंहः प्रयत्नं कृतवान्। किन्तु तावता सः तरुणः धनुषा मुक्तः बाणः इव वेगेन गच्छन् अदृश्यतां गतः आसीत्।

धीरसिंहः अत्याश्चर्येण वीरवर्माणं पृष्टवान् – "मित्र! किम् एतत्? तत् आह्वानं कस्य? तरुणः किमर्थं तथा धावितवान्? कोऽपि तं धावनात् निवारयितुं किमर्थं प्रयत्नं न कृतवान्?" इति।

"तच्च आह्वानं शब्दभेदिपर्वतात् आगतम्। यम् उद्दिश्य तत् आह्वानम् आगच्छति सः सर्वम् अपि विस्मृत्य पर्वतम् उद्दिश्य धावति। तथा गतेषु कोऽपि अद्यावधि न प्रत्यागतः। एवं गच्छतः निवारणप्रयासेन, तद्विषये दुःखप्रकटनेन च किमपि प्रयोजनं न भवति। अतः कोऽपि तादृशं न निवारयति, न वा तादृशस्य विषये दुःखम् अनुभवति" इति उक्तवान् वीरवर्मा।

"तथा आह्वानं किमर्थम् आगच्छति?" इति पृष्टवान् धीरसिंहः।

"तत् रहस्यं तु कोऽपि न जानाति" इति उक्तवान् वीरवर्मा।

"तथा धावन्तम् अनुसरामः चेत् वस्तुस्थितिः न ज्ञायेत वा?" इति पुनः पृष्टवान् धीरसिंहः।

"तथा कर्तुं कस्यापि धैर्यं नास्ति खलु?" इति उत्तरं दत्तवान् वीरवर्मा।

धीरसिंहः पुनः किमपि न पृष्टवान्। अनन्तरं तौ धर्मशालां गतवन्तौ।

ततः अष्टमे दिने धीरसिंहः वीरवर्मणा सह वार्तालापं कुर्वन् उद्याने उपविष्टवान् आसीत्। तावता पर्वतात् आह्वानम् आगतम्– "आगच्छतु भोः, शीघ्रम् आगच्छतु" इति।

अनन्तरक्षणे धीरसिंहस्य पुरतः उपविष्टः वीरवर्मा उन्मत्तः इव उत्थाय पर्वतम् उद्दिश्य धावनम् आरब्धवान्।

"तिष्ठतु तावत् वीरवर्मन्! " इति वदन् धीरसिंहः धावन् तम् अनुसृतवान्। वीरवर्मा तु धीरसिंहस्य वचनम् अशृण्वन् इव वेगेन धावति। धीरसिंहः वेगं वर्धयति चेत् वीरवर्मणः वेगः अपि वर्धते स्म। अल्पे एव

काले तौ पर्वतम् आरोढुम् आरब्धवन्तौ।

अग्रे काचित् महाशिला मार्गे दृष्टा। वीरवर्मा लीलया तां शिलाम् अतिक्रान्तवान्। धीरसिंहः अपि महता प्रयासेन ताम् अतिक्रम्य गतवान्। पुनः तृणमये अङ्गणे तयोः धावनम् अनुवृत्तम्। तदा अकस्मात् महता शब्देन सह भूमिः द्विधा विभक्ता जाता। वीरवर्मा एवं विभागात् उत्पन्ने खाते पतितवान्। तदनन्तरं भूमिः यथापूर्वं जाता।

धीरसिंहः दुःखेन आश्चर्येण च एतत्सर्वं पश्यन् सर्वत्र जागरूकतया दृष्टिं प्रसारयन् पर्वतशिखरम् उद्दिश्य प्रस्थितवान्। अल्पे एव काले सोढुम् अशक्येन तापेन सः पीडितः अभवत्। तथापि सः अग्रे गतवान्। तावता सः अग्निज्वालायुक्तां नदीं दृष्टवान्। एतस्याः नद्याः अतिक्रमणं कथम्, इति चिन्तयन् धीरसिंहः कस्याश्चित् शिलायाः उपरि उपविष्टवान्। तत्र तापबाधा तावत् न आसीत्। अतः सः शिलाम् आलम्ब्य उपविशन् पादौ प्रसारितवान्। तत्रैव निद्रां प्राप्तवान् च। निद्रायां सः कञ्चन स्वप्नं दृष्टवान्।

मनुष्यमुखः सिंहकायः कश्चन विचित्राकारः तस्य स्वप्ने आगत्य– ''धीरसिंह! भवतः मित्रम् अहं वीरवर्मा अस्मि। स्वप्नलोके मृगमनुष्यः जातः अस्मि। भवतः धैर्यं साहसं च अपूर्वम्। इतः परं एषः पर्वतः स्वप्नरूपं मुखं न उद्घाटयति।



अग्निनद्याः अपरस्मिन् तीरे अग्निनाभः नाम राक्षसः वज्रपर्वतं रक्षन् अस्ति। अग्निनद्यां काचित् नौका दृश्यते। ताम् आरुह्य अग्रे गच्छन् नदीम् अतिक्रम्य धैर्येण तम् अग्निनाभं राक्षसं मारयतु। एतत् सूर्योदयात् पूर्वम् एव करणीयम्। भवतः कार्ये जयः तु निश्चितः'' इति वदन् अग्रिमपादम् उन्नीय शुभाशंसनम् अकरोत्।

उषःकालसमये धीरसिंहः जागरणं प्राप्तवान्। सः झटिति उत्थाय अग्निनदीसमीपं गतवान्। नद्याः तीरे एका नौका आसीत्। सः अग्निज्वालाम् अपरिगणयन् धैर्येण उत्प्लुत्य नौकायाम् उपविष्टवान्। ततः विना विघ्नम् अपरं तीरं प्राप्तवान् सः।



प्रकाशमानं स्थलं न भूमिः, अपि तु कासारः इति धीरसिंहेन परीक्षणात् ज्ञातम्। कासारदर्शनेन धीरसिंहः पिपासां स्मृतवान्। स अग्रे गत्वा अञ्जलिना जलं पीतवान्। तावता तदीयं हस्तद्वयं रजतमयं जातम् आसीत्। चकितः धीरसिंहः जलम् अधः पातयित्वा अग्रे गतवान्। तत्र तेन सुवर्णद्रवमयः तटाकः दृष्टः। तत्र सुवर्णकमलानि विकसितानि आसन्। अपरत्र सुवर्णमयी काचित् नौका अपि आसीत्। तां नौकाम् आरुह्य तटाकम् अतिक्रम्य धीरसिंहः अग्रे गच्छन् पर्वतशिखरं प्राप्तवान्।

तत्र मणयः, रत्नानि, वज्राणि च शिलाः इव राशिरूपेण पतितानि आसन्। तत्कारणतः तच्च पर्वतशिखरम् इन्द्रधनुः इव राजते स्म। "षट् वज्राणि केवलं स्वीकरोतु। तेषु अहं निवसामि। एतेन भवतः हितं भविष्यति" इति अशरीरवाणी श्रुता। धीरसिंहः तद्वचनानुगुणं षट् वज्राणि स्वीकृत्य अग्रे गतवन्।

अनतिदूरे निर्मलजलयुता नदी प्रवहन्ती धीरसिंहेन दृष्टा। धीरसिंहः उत्साहेन अग्रे गत्वा नदीजलेन हस्तौ पादौ च प्रक्षालितवान्। एतेन रजतत्वम् आप्तवान् तस्य हस्तः यथापूर्वम् अभवत्। किन्तु नखाः रजतमयाः एव आसन्।

एतावता काचित् नौका प्रवाहेण सह तस्य समीपम् आगता। तस्याः आधारेण सः नद्याः

अत्रान्तरे भयङ्करः कश्चन राक्षसः प्रत्यक्षीभूय– "मम अनुमतिं विना एतस्यां भूमौ पदं स्थापितवान् सः उद्धतः कः?" इति कोपेन वदन् धीरसिंहसमीपम् आगतवान्। विद्युद्वेगेन धीरसिंहस्य खड्गः कार्यम् अकरोत्। राक्षसस्य मुण्डं भूमौ अपतत्।

अन्यक्षणे सः राक्षसः दिव्यपुरुषरूपं प्राप्य– "धीरसिंह! मित्राणि मया यत् वञ्चितानि ततः मया स्वप्नलोकस्य रक्षककार्यं क्रियमाणम् आसीत्। भवान् मां शापात् मोचितवान्। पर्वतः अपि शान्तः जातः। अहम् आगच्छामि तावत्" इति उक्त्वा आकाशमार्गेण गतवान्।

धीरसिंहः सन्तोषेण अग्रे गतवन्। स च प्रदेशः रजतमयः इव भासते स्म। एवं

अपरं तीरं प्राप्तवान्। ततः एकम् अरण्यम् अतिक्रम्य कञ्चन ग्रामं प्राप्तवान् सः। तस्य सम्मुखम् आगतः कश्चन ग्रामीणः भक्त्या धीरसिंहं नमस्कृतवान्।

"मां किमर्थम् एवं नमस्करोति? एषः ग्रामः कस्य देशस्य?" इति तं ग्रामीणं पृष्टवान् धीरसिंहः।

"नेपालदेशस्य सीमाप्रदेशो अस्ति एषः ग्रामः। भवान् खलु अस्माकं युवराजः! अतः एव नमस्करोमि" इति उक्तवान् सः ग्रामीणः।

धीरसिंहः सन्तोषेण कानिचन पदानि अग्रे गतवान्। तावता तदीयः अश्वः तत्र आगतः। तम् आरुह्य कौशाम्बीनगरं गत्वा सुलोचनां दृष्टवान् धीरसिंहः।

तत्समये आस्थानपण्डितः सुधाकराचार्यः अपि तत्रैव आसीत्। तौ धीरसिंहम् आदरेण स्वागतीकृत्य सत्कृतवन्तौ।

धीरसिंहः शब्दभेदिपर्वते दृष्टानि वैचित्र्याणि विस्तरेण निवेदितवान्। तस्मात् पर्वतात् आनीतानि वज्राणि, रजतमयरूपेण परिवृत्तान् नखान् च प्रदर्शितवान् सः।

एतत्सर्वं श्रुत्वा सुधाकराचार्यः– "धीरसिंह! अस्मिन् लोके भवता कर्तुम् अशक्यं कार्यं सर्वथा नास्ति। यतः भवतः धैर्यं साहसबुद्धिः च अनुपमम्। भवतः परोपकारबुद्धिः अपि नितरां श्लाघ्या एव" इति श्लाघनं कृत्वा सुलोचनां पश्यन् उक्तवान्– "वत्से! भवत्या पृष्टानां पञ्चानाम् अपि प्रश्नानां योग्यम् उत्तरं ज्ञात्वा आगतवान् अस्ति धीरसिंहः। भवत्या अभिलषितः धीरोदात्तः असमसाहसी तरुणः अस्ति एषः। नेपालराजकुमारस्य एतस्य परिणयः भवत्या अनुमतः खलु?" इति। सुलोचना मन्दहासं प्रकटयन्ती अङ्गीकार–पूर्वकं शिरः चालितवती।

अनन्तरं शुभे मुहूर्ते सुलोचना-धीरसिंहयोः विवाहः सवैभवं प्रवृत्तः। धीरसिंहः प्रजाः पुत्रान् इव प्रीत्या पालयन् दीर्घकालं यावत् राज्यं शासितवान्। (समाप्ता)






# अल्पबुद्धिः

सर्वदा वृक्षे एव तिष्ठन्तम्, अन्वेषणे किञ्चिदपि कष्टम् अयच्छन्तं वेतालं कृतज्ञतापूर्वकं स्मरन् इव त्रिविक्रमः यथापूर्वं वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः बेतालः अवदत्– "अये राजन्! एतस्मिन् समये वस्तुतः भवता तल्पे शयनं करणीयम् आसीत्। तत् परित्यज्य भवान् अत्र भीकरे श्मशाने अटन् कष्टं यत् अनुभवति तत् किमर्थं स्यात् इति तु मया न ज्ञायते। भवान् विद्यायां पारङ्गतः। सद्गुणी चापि अस्ति। एतादृशस्य भवतः स्वाभिमानं विशेषतः भवेत्। स च अंशः मया भवति न दृष्टः। यतः भवान् केनचित् अल्पबुद्धिना प्रेर्यमाणः इव व्यवहरति। अल्पबुद्धयः अल्पम् अपि पर्वतीकृत्य अन्ते स्वार्थं सम्पादयन्ति।

## वेतालकथा



अत्र उदाहरणरूपेण ग्रामाधिकारिणः वनभूषणस्य कथां श्रावयामि। तेन **भवतः अपि सन्तोषः भविष्यति एव।** मार्गायासश्च अपगतः भविष्यति" इति

अनन्तरं वेतालेन कथा आरब्धा–

वनभूषणः सीतापुरग्रामस्य ग्रामाधिकारी। उद्योगनिमित्तं तेन विभिन्नाः ग्रामाः नगराणि च गन्तव्यानि भवन्ति। एवं यत्र यत्र गम्यते तत्र सर्वत्र विशेषसत्कारः सम्मानः च लभ्यते इति सः सर्वान् वदति स्म। एतत् श्रुतवन्तः जनाः 'ग्रामाधिकारी भाग्यवान्' इति वदन्ति स्म।

एकदा वनभूषणेण विद्यानगरं प्रति गन्तव्यम् आपतितम्। विद्यानगरं सीतापुरतः सुदूरे अस्ति। विद्यानगरं प्रति सीतापुरतः समीचीनः मार्गः अपि नास्ति। तथापि विद्यानगरं द्रष्टव्यम् इति बहूनाम् इच्छा आसीत्। यतः विद्यानगरं सम्पद्भरितम् इति श्रूयते स्म। तत्रत्याः अतिथिसत्कारे सिद्धहस्ताः, परमोदाराः च इत्यपि प्रसिद्धिः आसीत्।

सीतापुरे चत्वारः ग्रामज्येष्ठाः आसन्। तेषाम् अपि मनसि विद्यानगरदर्शनविषये कुतूहलम् आसीत् एव। अतः ते वनभूषणस्य समीपम् आगत्य उक्तवन्तः– "श्रीमन्! भवान् शासकीयकार्यनिमित्तं विद्यानगरं गच्छन् अस्ति इति अस्माभिः श्रुतम्। तच्च नगरं द्रष्टव्यम् इति अस्माकम् बहोः कालतः इच्छा अस्ति एव। **भवान् अस्मान् अपि नेतुम् अर्हति** वा? सर्वत्र सत्कारपात्रं भवान् विद्यानगरे कीदृशं सत्कारं प्राप्नुयात् इति वयम् अपि द्रष्टुम् इच्छामः। भवता सह गच्छामः चेत् पुष्पकारणतः सूत्रेण इव अस्माभिः अपि गौरवं प्राप्येत। अतः अस्मान् अपि नयतु कृपया" इति।

वनभूषणः क्षणकालम् आलोच्य उक्तवान्– "मया सह भवन्तः आगच्छन्ति चेत् मम कोऽपि आक्षेपः नास्ति। किन्तु सम्माननं तु तत्तस्य योग्यतानुगुणं प्राप्यते। मया सह आगतान् एतान् अपि सम्मानयन्तु इति अहं तु वक्तुं न शक्नोमि। तथा कथनम् उचितम् अपि न। दैववशात् सम्माननं प्राप्तं

चेत् सन्तोष्टव्यम्। न प्राप्तं चेत् खेदः न अनुभोक्तव्यः। एतत् अनुमतं चेत् भवन्तः मया सह आगच्छन्तु" इति।



ते चत्वारः ग्रामप्रमुखाः वनभूषणस्य कथनम् अङ्गीकृतवन्तः। त्रिचतुर्णां दिनानाम् अनन्तरं ते विना विघ्नं विद्यानगरं प्राप्तवन्तः।

विद्यानगरप्राप्तेः समनन्तरम् एव राजप्रतिनिधिना प्रेषितः कश्चन वनभूषणसमीपम् आगत्य– "भवन्तः आहत्य पञ्च जनाः सन्ति वा? एकस्य निमित्तम् अस्माभिः समीचीनव्यवस्था कृता अस्ति। इदानीं किं करणीयम् इति न ज्ञायते" इति उक्तवान्।

"एते मम मित्राणि एव। अन्यस्यां धर्मशालायां कुत्रचित् वसतिव्यवस्थाम् उपकल्पयतु। ते अन्यथा न चिन्तयन्ति" इति उक्तवान् वनभूषणः।

"तत् कथं भवेत्? भवतः मित्रेषु अनादरं प्रकटयितुं वयं न इच्छामः" इति वदन् सः प्रतिनिधिः राजभवने एव सर्वेषां वसतिम् उपकल्पितवान्। ते ग्रामज्येष्ठाः वनभूषणस्य श्लाघनं कृतवन्तः।

विद्यानगरे वज्रवैढूर्यादीनि यथेष्टं लभ्यन्ते। वनभूषणः आपणं गत्वा वज्रद्वयं क्रीतवान्। तस्य धनं राजप्रतिनिधिः स्वयं दत्तवान्। तथैव तस्य मित्रेभ्यः अपि स्वव्ययेन एकैकस्मै वज्रद्वयं दापितवान्।

वनभूषणः ललितकलासु आसक्तः इत्यतः तस्य निमित्तं गानगोष्ठी कविसभा चापि व्यवस्थापिता।

कवितागोष्ठ्यां वनभूषणः कवित्वविषये भाषणं कृतवान्। आयोजकानाम् आग्रहवशात् सीतापुरीयाः चत्वारः वृद्धाः अपि स्वमत्यनुगुणं स्वाभिप्रायं प्रकटितवन्तः।

राजप्रतिनिधिः सभायाः अन्ते– "वनभूषणवर्य! भवतः ग्रामे न केवलं भवान्, इतरे सर्वे अपि ललितकलासु उत्तमाम् अभिरुचिं प्राप्तवन्तः सन्ति" इति उक्तवान्।

विद्यानगरे स्थितः महेश्वरदेवालयः सुप्रसिद्धः। वनभूषणः चत्वारः सीतापुरवृद्धाः



च तं देवालयं द्रष्टुं गतवन्तः। यावत् ते देवदर्शनं प्राप्य प्रतिगन्तुम् उद्युक्ताः तावता महती वृष्टिः अकस्मात् आरब्धा। तदा राजप्रतिनिधेः अनुचरः रामदासः झटिति आलयं गत्वा एकं छत्रम् आनीय वनभूषणस्य उपरि गृहीतवान्। एतेन वनभूषणः तु वृष्टितः रक्षितः जातः। ते ग्रामवृद्धाः तु वृष्ट्या सम्यक् क्लिन्नाः अभवन्।

यस्य निमित्तं वनभूषणः विद्यानगरम् आगतः तच्चं कार्यं समाप्तम्। राजोद्योगिनः वनभूषणाय, तन्मित्रेभ्यः ग्रामवृद्धेभ्यः च विविधानि उपायनानि दत्तवन्तः।

प्रतिप्रयाणात् पूर्वं ग्रामवृद्धाः वनभूषण-समीपं गत्वा– ''श्रीमन्! अत्रत्येभ्यः केभ्यश्चित् उपायनरूपेण दातुम् इच्छन्तः वयं कानिचन वस्तूनि आनीतवन्तः। अत्र तु वस्त्रदातारः सन्ति। भोजनकूटेन सत्कृतवन्तः सन्ति। ललितकलाप्रदर्शकाः रत्नकम्बल-दातारः च सन्ति। एवं बहुभिः बहुधा उपकृतम्। अतः कस्मै किं दातव्यम् इत्येव वयं न जानीमः। भवान् अस्माभिः आनीतानि वस्तूनि दृष्ट्वा कस्मै किं दातुं शक्यते इति वदतु कृपया'' इति उक्त्वा आत्मना आनीतानि वस्तूनि वनभूषणाय प्रदर्शितवन्तः।

वनभूषणः तानि उपेक्षया तिरस्कारभावेन च पश्यन्– ''एतादृशानि अल्पानि वस्तूनि महात्मसु कस्मै अपि दातुं योग्यानि न सन्ति। अतः एतानि सर्वाणि राजप्रतिनिधेः अनुचराय रामदासाय दातुम् अर्हन्ति भवन्तः'' इति उक्तवान्।

अनन्तरं रामदासम् आहूय तानि वस्तूनि तस्मै स्वयं दत्तवान् चापि।

अनन्तरं ते सर्वे सीतापुरं प्रत्यागतवन्तः। कृतज्ञतावचनानि उक्त्वा प्रतिगमनसमये कनिष्ठः ग्रामवृद्धः वनभूषणम् उक्तवान्– ''श्रीमन्! इतः परम् अपूर्वं प्रदेशं यदा भवान् गच्छेत् तदा अस्मान् अपि कृपया नयतु'' इति।

वनभूषणस्य उत्तरकथनात् पूर्वं ज्येष्ठः ग्रामवृद्धः कनिष्ठं उक्तवान्– ''भोः, एतावता

यः अवकाशः प्राप्तः तदर्थं सन्तोषम् अनुभवतु। तावता अलम्। राजोद्योगिनः राजकार्यार्थं गमनसमये सर्वदा मित्राणि आत्मना सह नयन्ति चेत् तत् उचितं न भवेत्। वनभूषणविषये अहम् अपि कृतज्ञः एव। तथापि इतः परम् एतेन सह अहं तु कुत्रापि गन्तुं न इच्छामि'' इति।

एवं कथां समाप्य वेतालः अवदत्— ''ज्येष्ठस्य ग्रामवृद्धस्य वचनात् ज्ञायते खलु यत् सः वनभूषणाय असूयति इति? तस्य असूयायाः किं कारणम्? किं सः कृतघ्नः? अथवा अल्पबुद्धिः स्यात् वा सः? एतेषां सन्देहानां समाधानं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः अवदत्— ''सः ज्येष्ठः ग्रामवृद्धः वस्तुतः न अल्पमतिः, अपि तु तीक्ष्णमतिः। 'मम समानतया इतरे गौरवं न प्राप्नुयुः' इति वनभूषणः प्रारम्भात् अपि चिन्तयन् आसीत्। आत्मनः तान् पृथक्कर्तुं वसतिव्यवस्था-सन्दर्भे, इतरत्र यत्र यत्र शक्यते तत्र सर्वत्र प्रयतमानः एव आसीत्। किन्तु विद्यानगरीयाः सज्जनाः इत्यतः ते किञ्चिदपि भेदभावं न प्रदर्शितवन्तः। किन्तु रामदासः एकः एव वनभूषणे विशेषगौरवं प्रदर्शितवान्। वृष्टिसमये वनभूषणस्य उपरि केवलं सः छत्रं गृहीतवान्। इतरेषां गतिः का स्यात् इति किञ्चिदपि न चिन्तितवान्। अतः एव सः वनभूषणाय नितराम् अरोचत। एतत्कारणतः एव वनभूषणः इतरेभ्यः उपायनदानस्य प्रस्तावं निराकृत्य रामदासाय सर्वाणि उपायनानि दत्तवान्। एतावता ज्ञायते यत् वनभूषणः एव अल्पबुद्धिः, अहङ्कारी च इति। अन्यैः क्रियमाणम् अन्येषाम् आदरम् अपि सः सर्वथा न सहते'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# मार्गदर्शनम्

आर्यपुरे अनन्तः रमेशः इति द्वौ सहोदरौ आस्ताम्। तौ गुणशीलौ। परस्परविश्वासः अपि तयोः महान् आसीत्। ग्रामे तयोः विशेषसम्मानः आसीत्। ये कष्टे भवन्ति तेषां साहाय्यं कुरुतः एतौ। बहवः एतयोः मार्गदर्शनं प्राप्नुतः।

अनन्तस्य मार्गदर्शनं यथा जनप्रियं भवति तथा रमेशस्य न भवति। एतत् कथम् इति रमेशस्य समस्या। गुणांशे उभयोः मार्गदर्शने विशेषभेदः तु न दृश्यते। अग्रजस्य व्यवहारं सुसूक्ष्मं परिशीलयति चेदपि तदीयं वचनं कथं परिणामकारि भवति इति न जानाति रमेशः। कदाचित् केचन रमेशस्य विषये उपेक्षाम् अपि प्रदर्शयन्ति स्म।

किमर्थम् एवं भवति इति ज्ञातव्यम् इति उद्देशेन कदाचित् रमेशः अग्रजं पृष्टवान्– ''अग्रज! भवतः मार्गदर्शनं सर्वे शिरसा अङ्गीकुर्वन्ति। किन्तु मम मार्गदर्शने तादृशं भावं सर्वे न प्रकटयन्ति। अत्र किं कारणम्?'' इति।

अनुजस्य वचनं श्रुत्वा अनन्तः मन्दहासपूर्वकम् उक्तवान्– ''मया अपि एषः अंशः लक्षितः। एतद्विषये भवान् किञ्चित् वक्तव्यः इति चिन्तयन् आसम् अपि। मार्गदर्शनसमये अहं कथं व्यवहरामि इति किञ्चित् सुसूक्ष्मं परिशीलयतु। तदा भवान् तत्त्वं ज्ञातुं शक्नोति'' इति।

तस्मिन् एव समये चन्द्रकान्तः नाम कृषिकः आगत्य उक्तवान्– ''श्रीमन्! एतस्मिन् वर्षे गृहं निर्मातव्यम् इति मम अपेक्षा। किन्तु मम पत्नी वदति– 'पुत्र्याः विवाहः प्रथमं भवतु' इति। उभयोः निमित्तं पर्याप्तं धनं मम समीपे नास्ति। अनयोः अन्यतरं तु कर्तुं शक्नोमि। किं प्रथमं करोमि



इत्येव मम समस्या। भवतः मार्गदर्शनानुसारम् अग्रिमं पदं स्थापयामि इति अत्र आगतवान्'' इति।

''भवतः पुत्र्याः किं वयः?'' इति पृष्टवान् अनन्तः।

''सा इदानीं पञ्चदशवर्षीया'' इति उत्तरं दत्तवान् चन्द्रकान्तः।

''एतावता कोऽपि वरः निश्चितः वा? वरः सद्यः प्राप्येत इति काऽपि आशा अस्ति वा?'' इति पृष्टवान् अनन्तः।

''तथा किमपि न निश्चितम्। इतः परं सर्वं करणीयम्'' इति उक्तवान् चन्द्रकान्तः।

तदा अनन्तः उक्तवान्– ''चन्द्रकान्त! भवतः पुत्री इतोऽपि अल्पवयस्का। द्वित्राणां वर्षाणाम् अनन्तरं तस्याः विवाहः भविष्यति चेदपि न काऽपि हानिः। अतः प्रथमं गृहनिर्माणं एव चिन्तयतु। पुत्र्याः विवाहार्थं पुनरपि धनसङ्ग्रहः शक्यते। अकस्मात् पुत्रीविवाहसमये सङ्ग्रहः न जातः चेदपि गृहस्य आधारेण ऋणं प्राप्तुं तु शक्यते एव। उभयम् अपि नास्ति इत्येतस्य अपेक्षया गृहनिर्माणस्य आरम्भः वरम्'' इति।

चन्द्रकान्तः अनन्तस्य वचनम् अङ्गीकृत्य सन्तोषेण अनन्तं रमेशं च नमस्कृत्य ततः गतवान्। तावता नारायणः नाम अन्यः कृषिकः आगतवान्। सः अनन्तं नमस्कृत्य– ''श्रीमन्! मम पुत्र्याः सीमन्तोन्नयनं निश्चितम् अस्ति। एका एव पुत्री इत्यतः स च कार्यक्रमः सवैभवं करणीयः इति विचारः अस्ति। किन्तु एतत्सन्दर्भे तावत् धनं हस्ते नास्ति। अतः वृषभद्वयं विक्रेतव्यम् इति आलोचितवान् अस्मि। मम पत्नी अपि अत्र सहमतिं प्रदर्शितवती। एवं करोमि वा इति प्रष्टुम् अत्र आगतवान्'' इति उक्तवान्।

''यथा निश्चितं तथैव करोतु नारायण!'' इति उक्तवान् अनन्तः।

''इदानीं मम मनः निश्चिन्तं जातम्'' इति वदन् नमस्कृत्य गतवान् नारायणः।

एतत्सर्वं पश्यन् स्थितः रमेशः अग्रजम् उक्तवान्– ''अग्रज! चन्द्रकान्तम् उद्दिश्य यत् उक्तं तत् तु युक्तम् एव। किन्तु नारायणम् उद्दिश्य यत् उक्तं तत्

असमीचीनम् इति मम अभिप्रायः। यतः वृषभौ तु तस्य जीवनस्य आधारभूतौ। तयोः विक्रयणेन अनन्तरकाले तस्यैव क्लेषः। तथापि तथा करणीयम् इति भवान् किमर्थं सूचितवान्?'' इति।

तदा अनन्तः मन्दहासपूर्वकम् उक्तवान्– ''रमेश! मार्गदर्शनं प्राप्तुं द्विविधाः जनाः अस्मत्समीपम् आगच्छन्ति। केचन तु समस्या आगता चेत् युक्तं निर्णयं कर्तुम् असमर्थाः सन्तः अस्मन्मार्गदर्शनानुगुणं व्यवहरणीयम् इति उद्देशेन अत्र आगच्छन्ति। तेषां विचारं ज्ञात्वा साधकबाधकं च विचिन्त्य ते उपदेष्टव्याः भवन्ति। अन्ये केचन एवम् एव करणीयम् इति मनसि निश्चित्य एव अस्मत्समीपम् आगच्छन्ति। तथा करणम् उचितं न इति उपदिष्टे अपि ते यथानिश्चितं कुर्वन्ति एव। मनःसमाधानं प्राप्तुं केवलम् अत्र आगच्छन्ति ते'' इति।

''अस्माकं समीपे निश्चयस्य कथनेन ते किं मनःसमाधानं प्राप्नुवन्ति?'' इति सन्देहेन पृष्टवान् रमेशः।

''आम्। आवयोः तु ग्रामे विशेषगौरवम् अस्ति। यदि फले वैपरीत्यं स्यात् तर्हि कोऽपि पृच्छेत् खलु – कं पृष्ट्वा निर्णयं स्वीकृतवान् इति? अतः एव तादृशाः अत्र आगत्य निश्चयं श्रावयित्वा अनुमतिः प्राप्ता इति समाधानं प्राप्य गच्छन्ति। नारायणः एवम् एव कृतवान्। चन्द्रकान्तः तु न तथा। वस्तुतः अपि सः मार्गदर्शनं प्राप्तुम् आगतवान्। अस्माकं सूचनानुगुणं करोति अपि। अतः आगतः कीदृशः इति प्रथमं ज्ञातव्यम्। वस्तुतः मार्गदर्शनं प्राप्तुम् एव आगतः चेत् योग्यं मार्गदर्शनं करणीयम्। मनःसमाधानं केवलं प्राप्तुम् आगतः चेत् अनुमतिदानम् एव उचितम्। एतत् एव मार्गदर्शनस्य तत्त्वम्'' इति उक्तवान् अनन्तः।

''भवतः वचनं सत्यम् एव। मार्गदर्शनसन्दर्भे पात्रापात्रविवेचनम् अपि अवश्यं करणीयम्'' इति वदन् रमेशः अग्रजं मनसा अभिवन्दितवान्।



## चन्दमामानुबन्धः – ८

# ज्ञानभाण्डागारम्

### एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्–



## गुरुः हरगोविन्दः

हरगोविन्दः १५९५ तमे वर्षे जून् १४ दिनाङ्के पञ्जाबराज्ये अमृतसरमण्डले वदलीग्रामे जातः। स्वस्य एकादशे वयसि एव एषः गुरुः जातः चेदपि प्रौढतायुक्तेन निर्णयेन विवेकयुतेन व्यवहारेण च सर्वान् आश्चर्यचकितान् कृतवान्।

सः खड्गद्वयं धरति स्म। एकः खड्गः तदीयां प्रापञ्चिकशक्तिं सङ्केतयति चेत् अपरश्च तदीयाम् आध्यात्मिकशक्तिं सङ्केतयति। सः सेनाम् आयोजितवान् तां सम्यक् शिक्षितवान् च। तेन पुनः पुनः मुघलराजाः सम्मुखीकरणीयाः अभवन्। किञ्चित्कालं यावत् सः ग्वालियर्दुर्गे बन्दी आसीत्। किन्तु अचिरात् एव ततः मुक्तः अभवत्।

१६२८ तमे वर्षे कदाचित् सः अमृतसरसमीपस्थे अरण्ये मृगयाविहारं कुर्वन् आसीत्। तदा शाहजहान् अपि मृगयार्थं तत्र आगतः। उभयपक्षयोः मध्ये कश्चन विवादः उत्पन्नः। सः युद्धे परिणतः अभवत् च। शाहजहान्सेना पराजिता अभवत्। हरगोविन्दः जानाति स्म यत् मुघलाः प्रतीकारसाधनार्थं पुनः आक्रमणं कुर्युः एव इति। सः सैन्यशक्तिं प्रबलां कृतवान्। अनन्तरकाले मुघलाः द्वित्रवारं आक्रमणं कृतवन्तः। तान् पराजितवान् एषः। ततः हिमालयस्य उपत्यकायां किरातपुरे वसतिं कृतवान्। तत्र सः सिक्खजनान् संघटयन् तत्त्वशास्त्रम् उपदिशन् च कालं यापितवान्। १६४४ तमे वर्षे मार्च् ३ दिनाङ्के दिवं गतः च।

## सः कः स्यात्?

श्रेष्ठः देवालयः निर्मातव्यः इति आदिष्टवान् राजा। द्वादशशतं शिल्पिनः द्वादशवर्षाणि यावत् कर्म कृत्वा देवालयं निर्मितवन्तः। अपूर्वा निर्मितिः सा। वृद्धिसमये समुद्रः तं देवालयम् आवृत्य तिष्ठति स्म।

गोपुरकलशस्य स्थापनं केवलम् अवशिष्टम् अस्ति। किन्तु तस्य स्थापनं इतरमन्दिरेषु यथा, तथा न सुलभम्। दुर्दैवं नाम, प्रधानशिल्पी कलशस्थापनस्य तं विशिष्टं क्रमं विस्मृतवान् अस्ति।

प्रधानशिल्पिनः पुत्रः पितरं द्रष्टुं मन्दिरस्थलम् आगतवान्। सः यद्यपि द्वादशवर्षीयः, तथापि शिल्पशास्त्रस्य बहूनि पुस्तकानि पठितवान् आसीत्। सः पितरं कलशस्थापनक्रमं स्मारितवान्। कलशः स्थापितः। ततः गच्छन् बालकः शिल्पिनां मध्ये प्रचलन्तं वार्तालापं श्रुतवान्– "अल्पेन बालकेन यत् कर्तुं शक्तं तादृशम् अस्माभिः न शक्तम् आसीत् इति ज्ञात्वा राजा अस्मद्विषये किं वा वदेत्?" इति। बालः तु अतीव कोमलहृदयः। सा च पूर्णचन्द्रयुक्ता रात्रिः। समुद्रः मन्दिरम् आवृत्य स्थितः अस्ति। एषः बालः मन्दिरगोपुरम् आरूढवान्, समुद्रे उत्पतितवान्, अदृश्यः अभवत् च।

एतस्यां लोककथायां प्रस्तुतः बालकः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः



## चूषणेन आलुकवेधनम्

**एवं कुर्वन्तु –**

कानिचन सोडाचूषणानि (Soda Straws) आलुकानि च स्वीकुर्वन्तु। चूषणम् आलुकस्य अन्तः प्रेषयितुं प्रयत्नं कुर्वन्तु। तदा चूषणम् अवनतं भवति। एवं ननु?

एतदनन्तरम् अन्यत् चूषणं स्वीकृत्य चूषणस्य एकम् अन्तम् उत्पीठिकायाः उपरि सम्यक् यथा स्थितं स्यात् तथा हस्तेन गृह्णन्तु। अपरेण हस्तेन आलुकं स्वीकुर्वन्तु। चूषणस्य उपरिभागे आलुकेन बलात् ताडयन्तु। चूषणस्य सम्यक्तया ग्रहणविषये अवधानं भवतु।

**किं भवति, किमर्थं च भवति?**

यदि आलुकेन ताडनं सम्यक् स्यात् तर्हि चूषणेन आलुकं विद्धं भवति। किन्तु यदि ताडनम् ऋजुतया न स्यात् तर्हि आलुकवेधनं न भवेत्। समीचीनतया अभ्यासः कृतः चेत् एकस्मिन् पार्श्वे प्रवेशितं चूषणम् आलुकस्य अपरस्मिन् पार्श्वे निर्गमयितुं शक्यते एव।

चूषणम् उत्पीठिकायाः उपरि सम्यक् स्थापितं भवति इत्यतः तस्य चलनं (कम्पनं वा) न भवति। आलुकं सहजतया एव चूषणस्य अपेक्षया मृदु। अतः यदा वयम् आलुकेन चूषणं ताडयामः तदा चूषणं पर्याप्तमात्रस्य स्वसामर्थ्यस्य बलात् आलुकस्य अन्तः प्रविशति।

चूषणं सम्पूर्णतया आलुकस्य अन्तः यथा गच्छेत् तथा कर्तुं शक्येत किम्? पुनः पुनः अभ्यासेन परिणामकारितया वेधनकौशलं सम्पादितं चेत् एतत् सुलभसाध्यम् एव।

एकम् आलुकम् उत्पीठिकायाः उपरि स्थापयित्वा तदुपरि चूषणं स्थापयित्वा अन्येन आलुकेन चूषणं ताडयामः चेत् चूषणम् आलुकद्वयम् अपि विध्यति किम्? परीक्ष्य जानन्तु।

चूषणेन आलुकं सम्यक् ताडितं चेत् किं वेधनं सिध्यति?



# विश्ववैचित्र्यम्

## चीनादेशीया अपूर्वा भित्तिः

गगनयात्रिकाः यथा यथा उपर्युपरि गच्छन्ति तथा तथा पर्वताः नगराणि च क्रमशः अस्पष्टानि भवन्ति। अन्तिमतया प्रायः दृश्यते – चीनादेशीया महाभित्तिः। भूमेः १/२० भागम् आवृत्य सार्धैकमैल्दीर्घतया स्थिता एषा भित्तिः मानवनिर्मिता अद्वितीया कृतिः। एषा भित्तिः २४,००० द्वारैः दुर्गभित्तिगोपुरैः च युक्ता अस्ति। एतस्याः औन्नत्यं माकिं २५ पादमितम्। एतस्याः मूलभागस्य वैशाल्यं २०-३० पादमितम्, उपरितनभागस्य वैशाल्यं तु १५ पादमितम्। केचन अश्वारोहिणः पार्श्वापार्श्वितया (Abreast) भित्तेः उपरि गन्तुम् अर्हन्ति। क्रि.पू. ३ शतके शिह्वांग् टै राजस्य काले एतस्याः निर्माणकार्यम् आरब्धम्, १,७०० वर्षाणि यावत् प्रवृत्तं च। मिंग् डैनेस्टिराजानां काले (१३६८-१६४४) एतस्य कार्यस्य समाप्तिः जाता।

## अपूर्वाः जागतिकघटनाः

# 'शान्तिप्रोत्साहकं युद्धम्

क्रि.पू. ३०० वर्षेभ्यः पूर्वं चन्द्रगुप्तः मौर्यसाम्राज्यं स्थापितवान्। तस्य अनन्तरं तदीयः पुत्रः बिम्बसारः राजा जातः। बिम्बसारस्य अनन्तरं तस्य पुत्रः अशोकः राजा जातः। महत्त्वाकांक्षी सः मौर्यसाम्राज्यं विस्तारयितुम् उद्युक्तः अभवत्। सः एकैकशः राज्यानि वशीकुर्वन् कलिङ्गपर्यन्तम् आगतवान्। न जानीमो वयं यत् तदा कः कलिङ्गस्य राजा आसीत् इति। कलिङ्गदेशीयाः एकीभूय दृढनिश्चयेन शत्रुं सम्मुखीकृतवन्तः इति भाति। किन्तु अशोकस्य सैन्यं तु प्रबलम्। एतस्मिन् युद्धे लक्षं जनाः मारिताः, सार्धैकलक्षं जनाः कारागारे स्थापिताः च। इतोऽपि अधिकाः जनाः युद्धानन्तरं दारिद्र्यकारणतः मृताः स्युः।

भीकरः अयं रक्तपातः, जनानां हृदयतापः च अशोकस्य हृदये परिवर्तनम् आनयत्। सः दिग्विजयप्रस्तावं परित्यक्तवान्। सः बौद्धमतम् अवलम्ब्य शान्तेः अहिंसायाः च प्रसारम् आरब्धवान्। प्रसिद्धः लेखकः एच्. जि. वेल्स् एवं वदति– "इतिहासे

सहस्राधिकानां राज्ञां मण्डले अशोकस्य नाम नक्षत्रम् इव अद्वितीयतया प्रकाशते" इति।

कलिङ्गयुद्धं भुवनेश्वरनगरसमीपे दयानद्याः तीरे धौलीनामके स्थले प्रवृत्तम्। तत्र पर्वतप्रदेशे अशोकस्य शान्तिसन्देशेन युक्तं शिलाशासनम् अद्यापि अस्ति।



# भारतीये इतिहासे कटाक्षपातः



१. भग्नं किं दुर्गं तिस्रः श्रेष्ठमहिलाः स्मारयति?

२. ता तिस्रः काः?

३. अन्ते मीराबाय्याः किम् अभवत्?

४. मीराबाय्या या अवस्था प्राप्ता सा एव अवस्था अन्यया अपि सज्जनमहिलया प्राप्ता। सा अन्या का?

५. कः चक्रवर्ती गौतमबुद्धात् किञ्चित्पूर्वं जातः, यश्च राज्यं परित्यज्य श्रेष्ठं मतम् एकं पुनरुज्जीवितवान्?

६. तस्य जन्म कुत्र अभवत्?

७. कः प्रसिद्धः राजा बुभुक्षया मरणं प्राप्तवान्?

८. तं ताम् अवस्थां कः प्रापितवान्?

(उत्तराणि अष्टमे पृष्ठे)

# वस्तुस्थितेः वैज्ञानिकान्वेषणस्य संशोधनस्य च प्रपञ्चः

१. सरटजातिविशेषस्य (Chameleon) जिह्वायाः दैर्घ्यं कियत्?

२. कः शाकः लोके अतिव्यापकतया उपयुज्यते?

३. जगति एव अतिविरलं सस्यं किम्?

४. सर्वथा मूकः पशुः कः?

५. आंग्लभाषायाम् अधिकतया कस्य अक्षरस्य उपयोगः क्रियते?

६. भवतः शरीरे कति अस्थीनि भवेयुः?

७. मानवस्य नाडी प्रतिनिमेषं कतिवारं स्पन्दते?

८. गजस्य नाडीस्पन्दनस्य किं परिमाणम्?

९. हिमभल्लूकस्य भारः कियान् स्यात्?

१०. चतुष्पादेषु वेगगामी जन्तुः कः?

(उत्तराणि अष्टमे पृष्ठे)




१. कः मुघलचक्रवर्ती भारतीयशास्त्रेषु पण्डितः आसीत्?

२. शिवाजिमहाराजस्य गुरुणा रामदासेन लिखितस्य ग्रन्थस्य नाम किम्?

३. संस्कृतस्य प्रसिद्धस्य प्राचीनतमस्य कोषस्य नाम किम्?

४. सिक्खानां पवित्रग्रन्थस्य नाम किम्?

५. तं ग्रन्थं कः विरचितवान्?

६. तत्र किम् अस्ति?

७. भारतीयज्ञानपीठप्रशस्तिं कः सर्वप्रथमं प्राप्तवान्?

८. तेन कया भाषया ग्रन्थाः लिखिताः?

९. भारतीयः समकालीनः लेखकः कः, यश्च स्वस्य चतुर्थे वयसि अन्धः जातः?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

**– दक्षिणा/अवाची –**

**अस्सामी**-दक्षिण, **बङ्गाली**-दक्षिण, **इंग्लीष्**-सौत्, **गुजराती**-दक्षिण,
**हिन्दी**–दक्षिण, **कन्नड**-दक्षिण, **काश्मीरी**-जोनुब, **मलयालम्**-तैक्कुन्,
**मराठी**-दक्षिण, **ओडिया**-दक्षिण, **सिन्धि**-दख्नु, **पञ्जाबी**-दक्षिण,
**तमिळु**-तैरुक्कन्, **तेलुगु**-दक्षिणमु, **उर्दु**-जुनुब।

## अपि भवान् विश्वसिति?

* यत् भानुवासरे सर्वेषां विरामः इति?
* यत् पूर्णचन्द्रदर्शनं यत्र सर्वथा न स्यात् तादृशः कोऽपि मासः भवितुम् अर्हति इति?
* अतिविशालं शङ्कुगृहं (Pyramid) इजिप्ट्देशे अस्ति इति?

## न तथा

* ग्रीक्जनाः सोमवासरे, पर्शियन्जनाः मङ्गलवासरे, मुस्लिम्जनाः (सामान्यतः) शुक्रवासरे, ज्यूजनाः च शनिवासरे विरामम् आचरन्ति।
* १८६६ तमे वर्षे फेब्रवरीमासे पूर्णचन्द्रदर्शनं न जातम्। एतादृश्याः अपूर्वघटनायाः पुनःसम्भवः तु २५ लक्षवर्षाणाम् अनन्तरं स्यात्।
* अतिविशालं शङ्कुगृहं तु मेक्सिकोदेशे अस्ति। प्रथमे क्रिस्तशके इष्टिकाभिः मृत्तिकया च एतत् निर्मितम्। एतस्य वैशाल्यं ४५ एकर्मितम्। औन्नत्यं च १७७ पादपरिमाणमितम्। च्योप्जनैः निर्मितम् इजिप्षियन् शङ्कुगृहम् अन्युन्नतम् (४८० द्वादशाङ्गुलोन्नतम्) इति तु सत्यम् एव। किन्तु तस्य वैशाल्यं तु केवलं १३ एकर्मितम्।

# उत्तराणि

## सः कः स्यात्?

धर्मपदः।

## इतिहासः

१. चित्तूरगढ़।

२. राज्ञी पद्मिनी, मीराबायी, धात्री पन्ना च।

३. सा द्वारकायां कृष्णमूर्तौ अन्तर्भूता इति विश्वस्यते।

४. तमिळनाडुदेशीया अण्डाळ्। सा श्रीरङ्गस्थायां रङ्गनाथस्वामिनः मूर्तौ अन्तर्भूता इति विश्वस्यते।

५. महावीरः क्रिस्तात् पूर्वं षष्ठे शतके जैनमतं पुनरुज्जीवितवान्।

६. वैशालीनगरे।

७. मगधराजः बिम्बसारः।

८. तदीयः पुत्रः अजातशत्रुः।

## विज्ञानादयः

१. तदीयं शरीरं यावत् भवति तावत्, ततोऽपि अधिकं वा।

२. पलाण्डुः।

३. एतत् सिल्वर्स्वर्ड्जातीयं विशिष्टं सस्यम्। एतत् हवालाद्वीपे अपूर्वेषु आग्नेयगिरिमुखेषु वर्धते।

४. चित्रोष्ट्रः (Giraffe)।

५. 'E' इत्येतत् अक्षरम्।

६. षडधिकशतम् अस्थीनि।

७. स्वस्थस्य पुरुषस्य नाडीस्पन्दनं प्रतिनिमेषं सामान्यतः ७५ वारम् भवति।

८. प्रतिनिमेषं २५ वारं भवति।

९. कदाचित् १००० पौण्ड् अपि भवितुम् अर्हति।

१०. तरक्षुः। एषः प्रतिघण्टं ७० मैल्वेगेन धावति।

## साहित्यम्

१. राजा दारा शूकोह्।

२. दासबोधः।

३. अमरकोषः।

४. आदि ग्रन्थ।

५. पञ्चमः गुरुः अर्जुनमल्।

६. गुरुनानकेन तदीयैः त्रिभिः उत्तराधिकारिभिः च लिखितानि पद्यानि, हिन्दु-जैनसंन्यासिभिः लिखिताः श्लोकाः च।

७. कविः जि. शङ्कर कुरुप्।

८. मलयालम् भाषया।

९. वेद् मेहता। सः अमेरिकादेशे निवसति।



# नेहरूकथा – ४

१९१९ तमे वर्षे बह्व्यः अराजकघटनाः प्रवृत्ताः। केनडातः आगतायां 'कामकटुमारु'नामिकायां नौकायां विप्लवकारिणः सन्ति इति सन्देहं प्राप्य आंग्लसर्वकारः तस्याः नौकायाः गमनस्य अवरोधम् अकरोत्। तीरम् आगतायां तस्यां नौकायां स्थितान् प्रयाणिकान् बहुधा अपीडयत् च।

आंग्लाधिकारिणां विरुद्धं कार्यं कुर्वन्ति इति सन्देहस्य ये पात्रं भवन्ति तादृशान् विना विचारणां कारागारवासेन दण्डयितुं यथा शक्येत तथा रौलट्नियमः व्यवहारे आगतः। एतस्य नियमस्य बलात् पत्रिकास्वातन्त्र्यस्य अपहरणम् अपि शक्यम् आसीत्।





एषु एव दिनेषु गान्धीजी अस्वस्थः जातः। गान्धीजी प्रबलं विरोधं प्रकटितवान् चेदपि रौलट्शासनं व्यवहारे आगतम् एव। अतः अखिलभारतस्तरे एतस्य नियमस्य विरुद्धं कार्यं कर्तुम् उद्युक्तः गान्धीजी। एतस्य प्रयत्नस्य नाम 'सत्याग्रहसभा' इति निश्चितम्। 'तस्याः सभायाः सर्वे सदस्याः रौलट्नियमम् उल्लङ्घ्य व्यवहरेयुः' इति निर्णयः स्वीकृतः।



सत्याग्रहसभायां प्रवेशः करणीयः इति निश्चितवान् जवहरः। तथा प्रवेशः कृतः चेत् कारागारवासः निश्चितः। 'मम पुत्रः कारागारे रूक्षायां भूमौ कथं वा शयनं कुर्यात्?' इति आतङ्कः मोतीलालस्य। अतः सः गृहे भूमौ शयनं कुर्वन् तत् कष्टं प्रत्यक्षम् अनुभूतवान्।

पञ्जाबप्रदेशे सैनिकशासनं प्रचलति स्म। तत्समये अमृतसरसमीपस्थे 'जलियन्वाला बाग्' इत्यत्र घोरा घटना प्रवृत्ता। स्वनायकस्य भाषणं श्रोतुम् आगतानां जनानाम् उपरि गोलकास्त्रवर्षणं कर्तुं सैनिकान् आदिष्टवान् अविवेकी आंग्लसेनापतिः जनरल् डैयर्। शतशः स्त्रीपुरुषाः तत्रैव प्राणान् त्यक्तवन्तः। सहस्रशः जनाः तीव्रं व्रणिताः।





'प्रजाः भीतिवशात् विनयेन व्यवहरेयुः' इति डैयर्महोदयस्य आशयः। अतः सः आज्ञापितवान् यत् केषुचित् मार्गेषु सम्मुखम् आगतः आंग्लाधिकारी सर्पणपूर्वकम् अग्रे गत्वा नमस्करणीयः इति। 'विद्यार्थिभिः प्रतिदिनं १०-१५ मैल् सञ्चारं कृत्वा घोरे आतपे घण्टां यावत् स्थातव्यम्' इति तस्य अन्या आज्ञा!

सैनिकशासनस्य अपगमानन्तरं चत्वारः कांग्रेस्नायकाः पञ्जाबप्रदेशे परिवर्तनम् आनेतुम् उद्युक्ताः जाताः। पण्डितः मदनमोहनमालवीयः स्वामी श्रद्धानन्दः च पुनरावासव्यवस्थार्थं प्रयत्नम् आरब्धवन्तौ। बहून् सेनासदस्यान् तौ मेलितवन्तौ चापि।





'जलियन्वाला बाग्' घटनायाः वास्तविकं स्वरूपं निर्णेतुं कांग्रेस् एकां समितिम् अमृतसरं प्रति अप्रेषयत्। तस्याः समित्याः नेतारौ मोतीलाल् नेहरू, देशबन्धुः चित्तरञ्जनदासः च। चित्तरञ्जनदासस्य साहाय्यार्थं जवहरलालः नियोजितः अभवत्। डैयर्वर्येण कृतं दारुणं मारणहोमं श्रुत्वा जवहरः सर्वथा दिग्भ्रान्तः।

उद्दिष्टस्य कार्यस्य समाप्तेः अनन्तरं जवहरलालः रात्रिसमये धूमशकटेन देहलीं प्रति प्रस्थितवान्। रिक्तायां शयनिकायां सः सुप्तवान् चापि। किन्तु प्रातःकालाभ्यन्तरे स च परिसरः सैनिकैः व्याप्तः आसीत्। तेषां सैनिकानां मध्ये उपविश्य जनरल् डैयर् आत्मना कृतं दारुणं कृत्यं निर्लज्जं साभिमानं च वर्णयन् आसीत्।





१९१९ तमे वर्षे अमृतसरनगरे कांग्रेसमहासभा प्रवृत्ता। तस्याः सभायाः अध्यक्षः आसीत् मोतीलाल नेहरू। एतस्याम् एव सभायां भारतराष्ट्रिय-कांग्रेस्संस्थायाः नूतनशकस्य नेतृरूपेण गान्धीजी अभिज्ञातः।

लोकमान्यतिलकः १९२० तमे वर्षे अगस्त्मासे प्रथमे दिनाङ्के मुम्बईनगरे कालवशः जातः। १९०६ तमे वर्षे तिलकः सूरतनगरे प्रवृत्तायां कांग्रेस्सभायां सम्पूर्णस्वराज्यं प्रतिपादितवान् आसीत्। १९१० तमे वर्षे अरविन्दघोष् राजकीयव्यवहारात् निवृत्तः जातः आसीत्। तिलकस्य मरणस्य अनन्तरं गान्धीजी कांग्रेस्नायकपदम् अलङ्कर्तुं सन्नाहं कुर्वन् आसीत्।





तिलकस्य मरणवार्तां श्रुत्वा तद्दिने एव गान्धीजी जवहरलालः च मुम्बईनगरम् आगतवन्तौ। तत्र सुमहत्यां सभायां तौ भागम् ऊढवन्तौ। तस्याः सभायाः विषये जवहरः एवम् उक्तवान् आसीत्— "प्रीतिपात्रस्य नायकस्य विषये गौरवं प्रदर्शयितुं दशलक्षजनैः युक्तं मुम्बईनगरम् एव उपस्थितम् आसीत् इव" इति।

—(अनुवर्तते)



# सौजन्यव्यवहारः

अभिरामः नाम कश्चन धनिकः पूर्वम् आसीत्। तस्य कश्चन अश्वशकटः आसीत्। तादृशः अश्वशकटः ग्रामे अन्यः न आसीत्। अतः अभिरामस्य शकटः सर्वान् बहुधा उपरोति स्म। ग्रामे उत्तमः वैद्यः न आसीत्। अतः सर्वे चिकित्सार्थं पार्श्वग्रामं गच्छन्ति स्म। रोगिणः नयनानयनार्थं अभिरामः सदा साहाय्यं करोति। मध्यरात्रे कश्चित् साहाय्यं प्रार्थयति चेत् अपि अभिरामः असमाधानं न प्रकटयति।

अभिरामः वार्धक्यवशात् मरणं प्राप्तवान्। तदीयः पुत्रः नरसिंहः यजमानः जातः। मरणसमये अभिरामः पुत्रं नरसिंहं सूचितवान् यत् ये आपदि भवन्ति तादृशानां साहाय्यम् अश्वशकटद्वारा कुर्वन् जीवतु इति। 'तथैव करोमि' इति नरसिंहः तत्समये पितरं यद्यपि उक्तवान्, किन्तु अनन्तरकाले तथा व्यवहर्तुं न शक्तवान् सः। नरसिंहः निद्राभङ्गं कथमपि न सहते। ग्रामीणाः बहवः स्वकष्टकारणतः तम् उत्थाप्य तस्य कोपपात्राणि जाताः आसन्। तान् अवाच्यैः शब्दैः निन्दित्वा प्रतिप्रेषितवान् आसीत् नरसिंहः।

कदाचित् विराजस्य पुत्रः विंशतिवर्षीयः कुत्रापि पतितः सन् तीव्रं व्रणितः जातः। मध्यरात्रे तस्य वेदना अत्यधिका जाता। अतः विराजः पुत्रं स्कन्धे आरोप्य नरसिंहं शकटसाहाय्यं प्रार्थितवान्।

एतेन नरसिंहः जागरितः अभवत्। निद्राभङ्गात् तस्य कोपः नितरां प्रवृद्धः। "यदा कदापि मध्यरात्रादिसमये अपि सूचनामात्रेण शकटं प्रयाणार्थं सज्जीकर्तुम् अहं भवतः सेवकः न। साहाय्यप्रार्थनसमये समयासमयप्रज्ञा स्यात्। इदानीम् अहं कुत्रापि



आगन्तुं न सिद्धः। भवान् गन्तुम् अर्हति'' इति क्रोधेन उक्त्वा द्वारपिधानं कृतवान् नरसिंहः।

अत्रान्तरे अपारां वेदनां सोढुम् अशक्तः विराजस्य पुत्रः तत्रैव प्राणान् अत्यजत्।

एतत् दृष्टवतः विराजस्य कोपः दुःखं च युगपद् एव आगतम्। कोपः द्वेषरूपेण परिवृत्तः।

'केनापि उपायेन नरसिंहस्य अपायः करणीयः' इति आलोच्य सः पुत्रस्य शवं नरसिंहस्य गृहस्य पुरतः अङ्गणे स्थापयित्वा न्यायाधिकारिणः गृहं गतवान्। न्यायाधीशम् उक्तवान् च– ''श्रीमन्! मम पुत्रं गृहकार्यार्थम् आहूतवान् नरसिंहः वेतनविषये वादविवादं कुर्वन् मम पुत्रं ताडयन् मारितवान् ....'' इति।

अभिरामस्य मरणानन्तरं याजमान्यं प्राप्तवान् नरसिंहः कस्यापि विशेषसाहाय्यं न कुर्वन् अस्ति इति श्रुतवान् आसीत् सः न्यायाधीशः। नरसिंहविषये तस्य असमाधानम् आसीत् अपि। अतः अवकाशः प्राप्तः चेत् नरसिंहः कठोरं दण्डनीयः इत्यपि आलोचयन् आसीत् सः।

विराजस्य कथनं श्रुतवती न्यायाधीशस्य पत्नी पतिम् अन्तः आहूय पृष्टवती– ''नरसिंहः दण्डनीयः इति चिन्तयन् अस्ति वा भवान्?'' इति।

''आं, सः दुष्टः अवश्यं दण्डनीयः। पितुः असदृशः पुत्रः सः'' इति उक्तवान् न्यायाधीकारी।

''किम् एतत् वदति भवान्? यदा आवयोः पुत्रः सर्पेण दष्टः आसीत् तदा अभिरामः एव खलु साहाय्यं कृतवान्? ततः एव खलु आवयोः पुत्रः जीवितः? तादृशस्य पुत्रं दुष्टं चेदपि दण्डयति चेत् अभिरामस्य आत्मा किं तप्तः न भवेत्? वस्तुतः तु केनापि उपायेन अभिरामस्य पुत्रः रक्षणीयः, न तु दण्डनीयः।'' इति उक्तवती न्यायाधीशपत्नी।

न्यायाधिकारी क्षणकालम् आलोच्य मनसि एव किमपि निश्चित्य बहिः गतवान्।

''भोः विराज! मुख्यः विषयः विस्मृतः आसीत् मया। मया बन्धुविवाहनिमित्तं पार्श्वग्रामं प्रति गन्तव्यम् अस्ति। अतः अद्य

मम समयावकाशः सर्वथा नास्ति। भवान् महाराजसमीपं गत्वा सर्वं निवेदयतु'' इति उक्तवान् न्यायाधीशः।

अनन्यगतिकः विराजः राजधानीं गत्वा राजानं दृष्ट्वा ''नरसिंहः मम पुत्रं ताडयन् मारितवान्'' इति निवेदितवान्।

राजा नरसिंहग्रामीणान् कांश्चन आहूय नरसिंहविषये तेषाम् अभिप्रायं पृष्टवान्। सर्वे नरसिंहविषये आक्षेपवचनानि एव उक्तवन्तः। अतः विराजस्य व्यवहारे विशेषविचारणां किमपि कर्तुम् अनिच्छन् राजा नरसिंहस्य मरणदण्डनम् आदिष्टवान्।

अनन्तरदिने एव नरसिंहस्य शूलारोपणं निश्चितम् आसीत्। किन्तु अनारोग्यकारणतः शूलारोपकः गोहः न उपस्थितः। अतः नरसिंहस्य शूलारोपणं न प्रवृत्तम्। एतदनन्तरं दश दिनानि अतीतानि चेदपि गोहः कार्यार्थं न उपस्थितः।

गोहः उद्देशपूर्वकम् अनारोग्यम् अभिनयन् स्यात् इति राज्ञः सन्देहः आगतः। अतः सः वस्तुस्थितिं ज्ञातुम् इच्छन् वेषान्तरेण गोहस्य गृहं प्रति गतवान्।

यावत् एषः गोहस्य गृहस्य भित्तेः समीपे स्थितवान् तावता गोहस्य पत्नी पतिं वदन्ती आसीत्– ''भोः, इतोऽपि एवम् एव कति दिनानि राजानं वञ्चयितुं शक्नोति भवान्? कदाचित् वा भवता नरसिंहः शूलम् आरोपणीयः भवेत् एव खलु?'' इति।

तदा गोहः निराकरणपूर्वकं शिरः चालयन् उक्तवान्– ''महाराजः माम् एव शूलम्



आरोपयेत् चेदपि अहं नरसिंहं शूलम् आरोपयितुं न सिद्धः। अहम् अपि तद्ग्रामीणः एव। मम बाल्ये अहं यदा रोगवशात् मरणावस्थायाम् आसं तदा एतस्य पिता मां चिकित्सालयं नेतुं साहाय्यं कृतवान्। औषधोपचारस्य व्ययः अपि तेनैव निरूढः। अतः अद्य अहं जीवामि। तादृशस्य पुण्यात्मनः पुत्रं शूलम् आरोपयन् अहं कथं वा पापभारं वहेयम्? अन्यच्च मम सन्देहोऽपि अस्ति यत् अभिरामस्य पुत्रः अल्पस्य वेतनस्य निमित्तं कमपि मारितवान् न स्यात् इति। महाराजस्य निर्णये, साक्षिणां कथने वा दोषः स्यात् इति अहं चिन्तयामि'' इति।

एतत् वचनं श्रुतवतः महाराजस्य मनसि विकल्पाः उत्पन्नाः। विराजस्य व्यवहारे इतोऽपि सम्यक् विचारणा करणीया इति निश्चितवान् सः।

अनन्तरदिने सः विराजं स्वसमीपम् आहूय तर्जनस्वरेण पृष्टवान्– ''भोः, सत्यं वदतु। नरसिंहः भवतः पुत्रं मारितवान् इति यत् तत् असत्यम्। एवं खलु?'' इति।

'महाराजः कथमपि वस्तुस्थितिं ज्ञातवान् एव' इति आलोच्य विराजः दैन्यं प्रदर्शयन् क्षमां प्रार्थयन् वस्तुस्थितिं निवेदितवान्।

राजा तत्क्षणे एव नरसिंहं बन्धविमुक्तं कृत्वा उक्तवान्– ''भोः, भवतः पिता मृतः चेदपि तदीयं सौजन्यं भवन्तम् अरक्षत्। भवान् निर्दोषी चेदपि स्वस्य निर्दोषित्वं प्रमाणीकर्तुं न शक्तवान्। वस्तुतः वस्तुस्थितिं जानद्भिः भवद्ग्रामीणैः भवत्परतया साक्ष्यं वक्तव्यम् आसीत्। किन्तु भवतः सौजन्यरहितात् व्यवहारात् खिन्नाः ते सर्वे मौनम् आश्रितवन्तः। अतः इतः परं वा सौजन्येन व्यवहरन् पिता इव जनानाम् उपकारं करोतु। एतेन भवतः जीवनम् उत्तमं भविष्यति। जनप्रियता अपि प्राप्यते'' इति।

एतस्याः घटनातः विवेकं प्राप्य नरसिंहः पिता इव सौजन्येन व्यवहरन् परोपकारं कर्तुम् आरब्धवान्। अचिरात् एव उत्तमां कीर्तिं सम्पादितवान् चापि।






# कृष्णावतारः

भगवान् विष्णुः लीलामानुषरूपेण सगौरवं यत् सत्कृतवान्, विनयेन आदरेण च योगक्षेमं यत् पृष्टवान् तेन सर्वे ऋषयः आनन्दपुलकिताः जाताः। ते आत्मना आनीतानि बदरफलानि कृष्णाय समर्पितवन्तः। अनन्तरं तेषु अन्यतमः ऋषिः सर्वेषां प्रतिनिधीभूय कृष्णम् एवम् उक्तवान्–

"कृष्ण! महतः कार्यस्य निमित्तं वयम् अत्र आगताः स्मः। भूदेव्याः पुत्रः नरकासुरः राक्षसानां नायकः अस्ति, अद्वितीयबलशाली चापि। सः समुद्रम् अपि शोषयितुम् अर्हति। पर्वतान् उन्मूलयितुम् अपि अर्हति। उत्तानां भूमिम् अधोमुखं कुर्यात् सः। सर्वान् लोकान् भीतिविह्वलितान् करोति सः। आत्मानं सकलब्रह्माण्डस्य नायकं मन्यते। इन्द्रादिदेवाः अपि दूरं प्रेषिताः तेन। कदाचित् सः बदरिकावनम् आगत्य यज्ञकार्यनिरतान् अस्मान् दृष्टवान्। देवताभ्यः आहुतयः न दातव्याः इति, मम नाम्ना आहुतीन् अर्पयन्तु इति च सः अस्मान् साग्रहम् उक्तवान्। निर्बन्धं कृतवान्। किन्तु वयं तत् न अङ्गीकृतवन्तः। तेन कुपितः सः अनुचरद्वारा यागाग्निं नाशितवान्, यागोपयोगीनि वस्तूनि उध्वस्तानि कारितवान्। ऋषिपत्नीः मुनिकन्यकाः च कारागारे स्थापितवान्। एवम् अस्माकं कार्ये विघ्नम् उत्पादयन् अस्माकं मानं धूलिसात्कृतवान्। वयं तु असहायाः! इदानीं भवान् एव शरणम् अस्माकम्" इति। अन्ये ऋषयः एतस्मिन्



वचने सहमतिं प्रदर्शितवन्तः।

एतत् श्रुत्वा सात्यकिप्रभृतयः यादवप्रमुखाः उक्तवन्तः– "एतस्याः समस्यायाः योग्यः परिहारोपायः अविलम्बेन चिन्तनीयः" इति। तदा कृष्णः ऋषीन् पश्यन्– "भोः, महात्मानः! भवतां मुखात् तस्य दुष्टस्य व्यवहारं श्रुतवतः मम मनः क्षुब्धम् अस्ति। अहं निश्चयेन तं राक्षसं नामावशिष्टं करिष्यामि। इतः परं भवताम् एतादृशः क्लेशः न भविष्यति। इदानीं निश्चिन्ताः स्वस्थानं गत्वा यज्ञादिषु नित्यकर्मसु उद्युक्ताः भवन्तु" इति वदन् अभयं दत्तवान्।

कृष्णस्य वाक्यानां श्रवणेन ऋषीणां मुखानि विकसितानि अभवन्। बहुभिः वचनैः कृष्णस्य स्तुतिं कृत्वा ते कृष्णस्य इतरेषां च अनुज्ञां प्राप्य निवृत्तभाराः सन्तः तृप्त्या बदरिकाश्रमं गतवन्तः।

ऋषीणां गमनानन्तरं सर्वैः दिक्पालकैः देवैः च सह इन्द्रः गगनाङ्गणात् अवतीर्य द्वारकां प्रविष्टवान्।

कृष्णः तान् सर्वान् स्वागतीकृत्य उचितानि आसनानि उपकल्पितवान्। इन्द्रः यादवप्रमुखान् आलिङ्ग्य तेषां विषये आत्मनः अभिमानं प्रदर्शितवान्। अनन्तरं सुधर्मानामिकायां सभायां ते सर्वे सम्मिलिताः।

इन्द्रः कृष्णस्य हस्तं स्वहस्तेन गृहीत्वा– "कृष्ण! अत्र मम आगमनकारणं निवेदयामि, शृणोतु। नरको नाम दैत्यनायकः ब्रह्मणः वरं प्राप्य औद्धत्येन व्यवहरन् अमरावत्याः उपरि आक्रमणं कृत्वा मां पदच्युतं कृतवान्। तस्य पीडां सोढुम् अशक्ताः वयं तं सम्मुखीकर्तुम् अशक्नुवन्तः सर्वं परित्यज्य मानवलोकं प्राप्तवन्तः स्मः। सः तु अस्माकं नगरं गृहाणि च प्रविश्य सर्वं विलुण्ठ्य गतवान् अस्ति। अस्माकं दुर्गतिं किमिति वदामि? अन्यैः सर्वथा प्राप्तुम् अशक्यं अदितिदेव्याः कुण्डलद्वयं तेन वशीकृतम्। ऋषिमुनीनाम् आश्रमाः तेन नाशिताः। सहस्रशः अकार्याणि क्रियमाणानि सन्ति तेन। 'भवान् जगद्रक्षणे बद्धकङ्कणः। बहूनां राक्षसानां मारणं कृतवान् अस्ति भवान्' इति ज्ञात्वा सः भवतः

उपरि अपि आक्रमणं चिन्तयन् अस्ति। तस्य गर्वः भञ्जनीयः भवता। एतद्विषये विलम्बः न करणीयः। तस्य मरणानन्तरम् एव लोके निश्चिन्तता भवितुम् अर्हति, न अन्यथा। पश्यतु, गरुडः भवतः वाहनं भवितुं सिद्धः सन् अत्र उपस्थितः अस्ति" इति उक्त्वा समीपस्थं गरुडं प्रदर्शितवान्।

कृष्णः देवेन्द्रं पश्यन् उक्तवान्– "देवेन्द्र! भवता उक्तान् अंशान् एव ऋषयः अपि उक्तवन्तः सन्ति। एतेन सः मारणीयः इत्ययं निश्चयः दृढः जातः। अद्यैव वयं सर्वे प्राग्ज्योतिषपुरं गच्छाम तावत्" इति।

अनन्तरं कृष्णः सभां विसृज्य चक्रायुधम्, इतराणि कानिचन आयुधानि च स्वीकृतवान्। सत्यभामाम् आनायितवान्। तया सह गरुडवाहनम् आरूढवान्। देवाः आकाशे स्थित्वा कृष्णस्य प्रयाणं पश्यन्तः आसन्। ज्येष्ठाः कृष्णम् आशीर्भिः अनुगृहीतवन्तः। वन्दिनः जयवाक्यानि उक्तवन्तः। इन्द्रः अग्रणीः सन् मार्गं प्रदर्शयन् आसीत्। सत्यभामासहितः गरुडवाहनः कृष्णः इन्द्रम् अनुसृतवान्।

आकाशमार्गेण गच्छन् कृष्णः दूरात् एव प्राग्ज्योतिषपुरं दृष्टवान्। तस्य नगरस्य रक्षणव्यवस्था कीदृशी अस्ति इति सुसूक्ष्मं परिशीलितवान् कृष्णः। नरकस्य प्रासादस्य रक्षणव्यवस्था कथम् अस्ति इत्यपि परिशीलितं तेन।

कृष्णः इन्द्रं तत्रैव स्थातुं सूचयित्वा अग्रे गतवान्। राक्षसवीरान् कदलीसस्यानि इव





कर्तयितुम् आरब्धवान् सः।

मुरासुरः प्रथमं कृष्णं सम्मुखीकृतवान्। तयोः मध्ये घोरं युद्धं प्रवृत्तम्। अन्ते कृष्णस्य अस्त्रं मुरासुरं गतप्राणम् अकरोत्। अनन्तरं निसुन्दः नाम राक्षसः युद्धार्थम् आगतवान्। सः स्वबाणप्रयोगेण सत्यभामायाः हस्तं व्रणितं कृतवान्। सत्यभामायाः हस्ततः रक्तस्रावं दृष्ट्वा क्रुद्धः कृष्णः प्रथमं निसुन्दस्य हस्तौ कर्तितवान्। ततः तस्य मुण्डं भूमौ पातितवान्।

एतदनन्तरं हयग्रीवः, अघोरपालः, विरूपाक्षः, प्रावणः, पञ्चजनः इत्यादयः महाराक्षसवीराः, अन्ये चतुरशीतिसहस्रं राक्षसाः च कृष्णेन मारिताः। तत्र शवाः राशिरूपेण पतिताः दृश्यन्ते स्म।

एवं नगरद्वाररक्षकान् राक्षसान् मारयित्वा कृष्णः अग्रे गतवान्। तावता पुनः अन्या राक्षससेना आक्रमणम् अकरोत्। तां सेनां लीलया नाशितवान् कृष्णः। अग्निना दग्धाः पतङ्गाः इव सर्वे राक्षसाः प्राणान् त्यक्तवन्तः।

एतत्सर्वं नरकासुरेण श्रुतम्। सः युद्धसन्नद्धः सन् स्वयम् अग्रे आगतवान्। देवसेनया देवप्रमुखैः वा रहितं कृष्णं दृष्ट्वा सः उक्तवान्– "अये नराधम! मम नाम नरकासुरः इति। इन्द्रादिदेवान् जित्वा त्रीन् लोकान् अपि वशीकृतवान् अस्मि अहम्। वीराधिवीराः अपि मम दर्शनमात्रेण निर्वीर्याः भवन्ति। अये! एषः पक्षी कः? भवता सह स्थिता एषा तरुणी का? एषा सुन्दरी कुत्र प्राप्ता भवता? भवतः मारणेन उभयथा लाभः मम– शत्रुमारणं, स्त्रीरत्नप्राप्तिः इति। आगच्छतु युद्धार्थम्" इति।

एतत् श्रुत्वा कृष्णः हसन् उक्तवान्– "यथा भवतः नाम तथैव मम नाम अपि त्रिषु लोकेषु विख्यातम् अस्ति। वासुदेवः इति मम कुलनाम। कृष्णः इत्यपि मम अन्यत् नाम। मम एषा धर्मपत्नी सत्यभामा। मम वाहनभूतः एषः पक्षिराजः गरुडः। भवन्तं मारयन् लोककल्याणं करिष्यामि इति निश्चित्य अत्र आगतवान् अस्मि" इति।

तदा नरकासुरः उच्चैः हसन्– "अहो!



वासुदेवः कृष्णः भवान् एव वा? भवता सह युद्धं करणीयम् इति मम बहोः कालतः अपेक्षा आसीत्। भवान् स्वयम् आगतः इति तु मम लाभाय एव अभवत्। यथाशक्ति युद्धं करोतु। इतः सजीवं गन्तुं न शक्यते इति विषयं प्रथमं मनसि स्थापयतु'' इति उक्त्वा युद्धम् आरब्धवान्। तयोः मध्ये घोरं युद्धं प्रवृत्तम्। कस्य बलम् अधिकम् इति तु निर्णेतुम् एव न शक्यते। अन्ते तीव्रं व्रणितः कृष्णः मूर्च्छां गतवान्।

एतत् दृष्ट्वा सत्यभामा अग्रे आगत्य कृष्णस्य ललाटे इतरत्र च लग्नान् बाणान् अपनीतवती। रक्तं यथा न स्रवेत् तथा व्रणान् अङ्गुलीभिः आच्छादितवती। गरुडः पक्षाभ्यां वीजितवान्। एतेन कृष्णः सचेतनः जातः।

सः सत्यभामां दृष्ट्वा उक्तवान्– ''अहम् अतीव श्रान्तः अस्मि। भवती किञ्चित्कालं युद्धं करोतु'' इति।

सत्यभामा कृष्णस्य धनुः तूणीरं च उन्नीय युद्धार्थं गतवती। धनुषि बाणं योजितवती।

विश्रान्तिसुखम् अनुभवन् स्थितः नरकासुरः कृष्णय रथात् आगच्छतः बाणान् दृष्ट्वा चकितः। सः झटिति उत्थाय रथे सत्यभामां दृष्ट्वा– ''मां जेतुम् असमर्थः कृष्णः युद्धार्थं पत्नीं योजितवान् अस्ति। अहो निर्लज्जता!'' इति वदन् सत्यभामायाः उपरि बाणवर्षणं कृतवान्। केचन बाणाः सत्यभामायाः उरसि, बाहुषु च लग्नाः। एतत् अविगणयन्ती सा रणचण्डी इव हूंकुर्वती बाणान् प्रयुक्तवती। नरकासुरस्य ध्वजं पातयित्वा रथाश्वं सारथिं च मारितवती। नरकासुरेण प्रयुक्तान् सर्वान् बाणान् स्वबाणैः भञ्जितवती। एवं हतवीर्यः नरकासुरः गदाम् उन्नीय तस्याः उपरि प्रयुक्तवान्। किन्तु सत्यभामा तां गदां चूर्णीकृतवती। नरकासुरेण प्रयुक्तानि अन्यानि आयुधानि अपि एवम् एव नाशितवती।

सत्यभामायाः युद्धकौशलं दृष्ट्वा कृष्णः नितरां तृप्तः। सः सत्यभामाम् आलिङ्ग्य तस्याः मुखे दृश्यमानं स्वेदं मार्जयन्– ''भवती नितरां श्रान्ता। अलं युद्धेन। विश्रातिं

स्वीकरोतु" इति ताम् उक्त्वा तस्याः कण्ठे स्वकण्ठस्थं हारं स्थापितवान्। तस्य हारस्य प्राप्त्यर्थं पूर्वं रुक्मिणी सत्यभामा चापि प्रयत्नं कृतवत्यौ आस्ताम्। किन्तु तदा कयाचित् अपि सः हारः न प्राप्तः आसीत्। तादृशः हारः इदानीं प्राप्तः अस्ति सत्यभामया। तस्याः तु निरवधिकः सन्तोषः। कृष्णः सत्यभामायाः हस्ते स्थितं धनुः स्वीकृत्य पुनः युद्धार्थं सन्नद्धः जातः। अत्रान्तरे नरकासुरः अपरं रथम् आरुह्य बाणवर्षणम् आरब्धवान्। ते बाणाः कृष्णस्य, सत्यभामायाः, गरुडस्य च उपरि पतिताः।



कृष्णः नरकासुरस्य नूतनं रथं, सारथिम्, अश्वान् च नाशितवान्। क्रोधाविष्टः नरकासुरः गदाम् उन्नीय कृष्णस्य उपरि आक्रमणं कृतवान्। नरकासुरेण प्रयुक्ता गदा कृष्णेन प्रयुक्तैः बाणैः छिन्ना जाता। अन्ते नरकः अन्यानि आयुधानि, वृक्षान्, पाषाणान् च क्षिप्तवान्। कृष्णः तानि मध्येमार्गं भञ्जितवान्। तेषां पतनेन बहवः राक्षससैनिकाः मृताः।

अन्ते कृष्णः नरकस्य उपरि चक्रायुधं प्रयुक्तवान्। तच्च आयुधं नरकासुरं द्विधा विदारितम् अकरोत्। नरकासुरः गतप्राणः जातः। तदा भूदेवी मानवाकारेण आगत्य स्वपुत्रस्य शवम् आलिङ्ग्य तस्य कर्णयोः स्थितं दिव्यं कुण्डलद्वयं स्वीकृत्य कृष्णसमीपम् आगत्य अश्रूणि स्रावयन्ती कृष्णं नमस्कृत्य– "कृष्ण! भवदनुग्रहात् एव मया पुत्रः प्राप्तः आसीत्। सः लोककण्टकम् आसीत् इत्यतः भवान् एव तं मारितवान्। इतः परं देवाः मुनयः च निश्चिन्ततया स्थातुम् अर्हन्ति। एतत् कुण्डलद्वयं पूर्वं नरकः इन्द्रलोकात् आनीतवान् आसीत्। तत् स्वीकरोतु। नरकस्य राज्यं तस्य पुत्रस्य अधीनं करोतु" इति उक्तवती।

कृष्णः तत् कुण्डलं स्वीकृत्य– "भवत्या यथा उक्तं तथैव एतत् राज्यं नरकपुत्रस्य अधीनं करोमि" इति उक्तवान्। भूदेवी अदृश्यतां गतवती।

कृष्णः नरकासुरस्य अन्त्यसंस्कारं निर्वर्तितवान्। अनन्तरं नरकासुरस्य पुत्रं

भगदत्तं पट्टाभिषिक्तं कृत्वा प्राग्ज्योतिषपुरं तदधीनं कृतवान्।

नरकासुरेण विलुण्ठ्य आनीतम् अपारम् ऐश्वयम् आसीत् तस्मिन् नगरे। तत् दिक्पालकेभ्यः वशीकृतम् आसीत्। अधिकारिणः तत् ऐश्वर्यं कृष्णस्य पुरतः स्थापयित्वा विधेयतया स्थितवन्तः। तत् ऐश्वर्यं कृष्णस्य अधीनं जातम्।

मणिशैलसमीपे कारागारे षोडशसहस्रं स्त्रियः बद्धाः आसन्। कृष्णः सपरिवारं तत्र गतवान्। ताः स्त्रियः कृष्णं दृष्ट्वा उक्तवत्यः– "नरकासुरेण बद्धाः देवता-स्त्रियः वयम्। कदाचित् नारदः अत्र आगत्य उक्तवान् आसीत् यत् विष्णुः मानवरूपं प्राप्य नरकासुरं मारयन् भवतीनां पतिः भविष्यति इति। तस्य वचने विश्वस्य वयम् एतावत्पर्यन्तं प्राणान् धृतवत्यः। इदानीं तादृशः कालः अपि सन्निहितः। वयं धन्याः जाताः" इति।

कृष्णः तासां प्रार्थनाम् अङ्गीकृत्य स्नेहदृष्ट्या ताः अनुगृह्णन् शिबिकाः आनेतुं भटान् आदिष्टवान्। अनन्तरं कृष्णः मणिशैले विहारं समाप्य तदीयम् एकं शिखरम् उत्पाट्य गरुडस्य उपरि स्थापितवान्। गरुडः तत् पर्वतशिखरं लीलया धृतवान्। अनन्तरं कृष्णः सत्यभामा च गरुडम् आरूढवन्तौ।

कृष्णः ततः इन्द्रलोकं गतवान्। इन्द्रः शचीदेवीसहितः तौ स्वागतीकृतवान्। शची सत्यभामां प्रीत्या आलिङ्गितवती। कृष्णः इन्द्रं नमस्कृत्य अदितेः कुण्डलद्वयं तस्मै दत्तवान्। सत्यभामायाः युद्धकौशलं शचीदेवी बहुधा श्लाघितवती।

"भामे! भवती यत् इच्छति तत् दातुम् इच्छामि अहम्! भवत्याः अपेक्षां निस्सङ्कोचं प्रकटयतु" इति सत्यभामाम् उक्तवती शचीदेवी।

"मम कापि अपेक्षा नास्ति। भवत्याः स्नेहः यत् प्राप्तः तेन एव अहं नितरां सन्तुष्टा अस्मि" इति उत्तरं दत्तवती सत्यभामा।





# कोपोपशान्तिः

यवपुरे पूर्वं रत्नाकरः नाम धनिकः निवसति स्म। ईश्वरः तस्य गृहे सेवकरूपेण आसीत्। यजमानेन उच्यमानानि सर्वाणि कार्याणि सः विना खेदं करोति स्म। रत्नाकरः अपि ईश्वरम् औरसपुत्रम् इव प्रीत्या पश्यति स्म।

कदाचित् धनगुप्तः नाम दूरबन्धुः रत्नाकरस्य गृहम् आगतवान्। सः शीघ्रकोपी। अल्पेन अपि कारणेन सः कुपितः भवति। कोपसमये पुरतः स्थितम् अवाच्यैः शब्दैः निन्दति।

कदाचित् धनगुप्तः ईश्वरं विना कारणम् अवाच्यैः शब्दैः बहुधा निन्दितवान्। अद्यावधि एतादृशानि कठोरवचनानि न श्रुतानि आसन् ईश्वरेण। अतः नितरां खिन्नः सः गृहे एकत्र कोणे अश्रूणि स्रावितवान्।

एतत् कथमपि रत्नाकरेण ज्ञातम्। सः धनगुप्तम् उक्तवान्– "भोः, ईश्वरम् अहं पुत्रवत् पश्यामि। तेन दोषे कृते अपि तम् अहं कदापि न निन्दामि। भवान् तु तं विनापराधं निन्दितवान् इति श्रुतम्। एतत् सर्वथा अनुचितम्" इति।

तदा धनगुप्तः उक्तवान्– "सत्यं, मया तस्य निन्दनं कृतम्। एषः मम अभ्यासः। मम मनसि स्थितम् असमाधानं कुत्र प्रकटयामि? प्रभुविषये प्रकटितं चेत् कारागारवासः निश्चितः। समानवयस्कानां विषये प्रकटितं चेत् मनस्तापः उत्पद्यते। ग्राहकाणां विषये प्रदर्शितं चेत् वाणिज्ये हानिः अनुभोक्तव्या। पत्नीपुत्रादीनां विषये प्रकाशितं चेत् गृहस्य शान्तिः नश्यति। अतः एव मादृशाः कर्मकरान् पदे पदे निन्दन्ति। एतेन कोपः शाम्यति। मनः स्वस्थं भवति। अन्यच्च यः यजमानस्य कोपं विना विरोधं न सहते, तादृशेन कर्मकरेण किं वा प्रयोजनम्?" इति।



''भवतः तु विचित्रा तर्कसरणिः। एवं चेत् कर्मकराः कुतः प्राप्यन्ते?'' इति पृष्टवान् रत्नाकरः।

''अस्माकं प्रदेशे तादृशी परिस्थितिः नास्ति। सर्वम् अपि सोढ्वा कार्यं कर्तुं सिद्धाः भवन्ति कर्मकराः। अन्यथा उद्योगात् निष्कासनं भवेत् इति भीतिः तेषाम्। उद्योगः नास्ति चेत् उपवासः एव गतिः। दारिद्र्यं सहनां पाठयति'' इति उक्तवान् धनगुप्तः।

''ते सहन्ते इत्यतः किं विना कारणं निन्दनं करणीयम्? तदा ते मुखतः किमपि न वदेयुः चेदपि तेषां मनः तर्जितवन्तं निन्दति एव। तादृशानां शापः प्रगतिं निवारयति'' इति रत्नाकरः उक्तवान्।

तदा धनगुप्तः हसन् उक्तवान्– ''अत्र कश्चन उपायः अस्ति। विना कारणं तर्जनं कृतं भवति चेत् किञ्चित्कालानन्तरं तम् आहूय मृदूनि वचनानि उक्त्वा एकं रजतनाणकं दातव्यम्। तदा सः सन्तुष्टः भवति। तर्जनं श्रुतं चेदपि अनन्तरकाले धनं लभ्यते इत्यतः सः तर्जनं प्रतीक्षमाणः एव तिष्ठति'' इति।

''उपायः समीचीनः एव। किन्तु विना कारणं कर्मकरस्य तर्जनस्य का आवश्यकता?'' इति पृष्टवान् रत्नाकरः।

''कर्मकरस्य तर्जनेन कोपः शाम्यति। अतः पत्नीपुत्रादीनां निन्दनं न भवति। अतः गृहे हितकरः परिसरः तिष्ठति। अन्यच्च निन्दनं नाम यजमानस्य लक्षणं तत्। ईश्वरस्य स्वभावम् अपि परिचाययामि, पश्यतु'' इति उक्त्वा धनगुप्तः ईश्वरं समीपम् आहूतवान्। ''भोः, व्यावहारिकक्लेशात् खिन्नः अहम् उद्वेगवशात् किमपि उक्तवान् स्याम्। तत् मनसि मा स्थापयतु। एतत् रूप्यकद्वयं स्वीकरोतु। तण्डुलेन अवकराः मिश्रिताः चेत् अपि वयं तण्डुलविषये असमाधानं न प्राप्नुमः। अवकरं निष्कास्य तण्डुलं स्वीकुर्मः। एतत् व्यवहारतत्त्वम्'' इति वदन् रूप्यकद्वयं तस्मै दत्तवान् सः।

सायङ्काले ईश्वरेण क्रियमाणं कस्यापि निन्दनं रत्नाकर-धनगुप्ताभ्यां श्रुतम्। तौ तस्य समीपं गतवन्तौ। तत्समये ईश्वरः

तण्डुलस्वच्छीकरणे मग्नः आसीत्।

"किम् एतत् ईश्वर! कं निन्दति भवान्?" इति पृष्टवान् रत्नाकरः।

"कम् अन्यं निन्देयम्? एतं तण्डुलं विक्रीतवन्तं स्वार्थपरं वणिजं निन्दामि" इति उत्तरं दत्तवान् ईश्वरः।

"तेन भवतः कः अपकारः कृतः?" इति आश्चर्येण पृष्टवान् रत्नाकरः।

"सः न केवलं मम, लोकस्य एव अपकारं करोति। पश्यतु एतं तण्डुलम्। अत्र अवकराः एव बहवः। व्रीहिसस्यानि एतादृशं तण्डुलं न उत्पादयन्ति। कृषिकः अपि एतादृशं तण्डुलं न सज्जीकरोति। तुषम् अपनीय तण्डुलं ये कुर्वन्ति ते अपि निर्वञ्चनया एव कार्यं कुर्वन्ति। स्वार्थपरः वणिक् तु दुराशया प्रेरितः सन् तण्डुले अवकरान् योजयति। एतेषाम् अपनयनसमये तं स्वार्थपरं वणिजं यदि वयं न निन्देम तर्हि अस्माकं कोपोपशान्तिः कथम्? न केवलम् अहं, तण्डुलस्वच्छीकर्तारः सर्वे एवम् एव निन्दन्ति" इति उक्तवान् ईश्वरः।

रत्नाकरः मौनम् आश्रित्य धनगुप्तेन सह स्वप्रकोष्ठं गतवान्। तत्र धनगुप्तं पृष्टवान् च— "ईश्वरस्य वचनं श्रुतं खलु भवता?" इति।

"आम्। ईश्वरः कर्मकरः चेदपि महाचतुरः" इति उत्तरं दत्तवान् धनगुप्तः।

रत्नाकरः मन्दहासपूर्वकं पुनः उक्तवान्— "पारितोषिकदानेन कर्मकरः कोपं विस्मरिष्यति इति उक्तं खलु भवता। तत् असत्यम् इति इदानीं ज्ञातवान् स्यात् भवान्। अस्माकं कोपपात्रं कर्मकरः स्वकोपोपशान्तये अन्यं निन्दति। तात्कालिकी उपशान्तिः धनदानेन भवितुम् अर्हति, तावदेव। एकस्य कोपः अपरस्य कोपं प्रेरयति। ततश्च परिसरः एव शान्तिरहितः भवति" इति।

"आं, भवदुक्तं सत्यम् एव। मया मम व्यवहारे परिवर्तनम् आनेतव्यम् अस्ति। अन्यथा ममैव हानिः" इति रत्नाकरम् उक्तवान् धनगुप्तः।





# दायादभावः

आफ्रिकादेशे महतः सरोवरस्य पार्श्वे रामोगी नाम कश्चन वृद्धः निवसति स्म। तस्य सप्त पुत्राः। ते सर्वे स्वपत्नीपुत्रैः सह विभिन्नेषु कुटीरेषु निवसन्ति। अतः एकः एव परिवारः तत्र निवसति चेदपि स च प्रदेशः ग्रामः इव दृश्यते स्म। किन्तु रामोगी यदा दिवङ्गतः तदा तस्य ज्येष्ठः पुत्रः यजमानः जातः। तस्य व्यवहारः इतरेभ्यः न अरोचत। अतः सर्वे सहोदराः अन्यत्र वसतिं कर्तुम् उद्युक्ताः जाताः।

रामोगीपुत्रेषु पोदुः अरुवः च अन्तिमौ। बाल्यतः अपि तयोः परस्परप्रीतिः अधिका। एकः वचनस्य आरम्भं करोति चेत् अपरः समाप्तिं करोति। अग्रजः यां परिणीतवान् तस्याः अनुजां परिणीतवान् अनुजः। एवम् आत्मीयतया स्थितौ तौ परस्परं दूरे स्थातुं न इच्छतः। अतः एकत्र एव वसतिः करणीया इति तौ निश्चितवन्तौ। मूलस्थानात् निर्गतयोः सहोदरयोः एकत्र वसतिः तत्काले निषिद्धम् आसीत्। तम् आचारनियमम् उपेक्षितवन्तौ तौ।

रामोगीपरिवारस्य वसतेः पूर्वस्यां दिशि विशालम् अरण्यम् आसीत्। तस्य समीपे वसतिः करणीया, कृषिश्च आरम्भणीया इति तौ निश्चितवन्तौ।

किन्तु एतत्कार्यं तावत् सुलभसाध्यं न आसीत्। यतः अनतिदूरे सुविशालम् अरण्यम् अस्ति। मन्त्रारण्यम् इति तस्य नाम। अरण्ये काचित् मन्त्रशक्तिः तिष्ठति इति जनानां विश्वासः आसीत्। अरण्यतः आगतस्य वायोः सम्पर्कात् अपि जनाः भीताः भवन्ति स्म। एतादृशस्य अरण्यस्य पार्श्वे पोदुः अरुवः च गृहं निर्मितवन्तौ। क्षेत्रं सज्जीकृत्य यावानलम् आरोपितवन्तौ। कालान्तरे

"आफ्रिकादेशीया जानपदकथा"

यावानलसस्यानि प्रवृद्धानि, फलितानि च। सस्यकर्तनकालः अपि सन्निहितः।

एतेषु दिनेषु कदाचित् अरुवः पशुचारणार्थं बहिः गतवान् आसीत्। पोदुः तु सूर्ये उदिते अपि आलस्येन शयानः एव आसीत्।

तदा बालाः अकस्मात् "गजाः! गजाः!" इति आक्रोशनं कृतवन्तः। पोदुः झटिति उत्थाय शूलायुधं गृहीत्वा विद्युद्वेगेन धावितवान्।

तावता गजाः यावानलक्षेत्रं प्रविश्य शुण्डया सस्यं भञ्जयित्वा खादन्तः आसन्। पोदुः क्षेत्रात् किञ्चिद्दूरे स्थित्वा उच्चैः ध्वनिम् उत्पादितवान्। एतत् श्रुत्वा सर्वे गजाः खादनं परित्यज्य पोदुं द्रष्टुम् आरब्धवन्तः।

तेषां गजानां मध्ये कश्चन दृढकायः उन्नतः गजः विशेषतः दृश्यते स्म। पोदुः तम् उद्दिश्य बलात् शूलं प्रयुक्तवान्। तच्च शूलं गजस्य शरीरे सम्यक् लग्नम्। स च गजः वेदनया क्रन्दन् इव उच्चैः घीङ्कारम् अकरोत्। अनन्तरं सः अरण्यम् उद्दिश्य अगच्छत् च। अन्ये गजाः तम् अनुसरन्तः अरण्यं प्रविष्टवन्तः।

एतत्सन्दर्भे पोदुना एकम् अकार्यं कृतम् आसीत्। तेन गजम् उद्दिश्य यत् शूलं प्रयुक्तं तत् न सामान्यम्। पित्रा रामोगिना वंशपारम्पर्येण प्राप्तम् आसीत् तत्। तस्य



शूलायुधस्य मन्त्रशक्तिः अस्ति इति विश्वासः आसीत्। तत् विशिष्टं शूलं तु कनिष्ठपुत्राय अरुवाय दत्तवान् आसीत् रामोगी। अरुवः तत् शूलं प्राणसमं भावयति स्म।

त्वरावशात् पोदुः तत् विशिष्टं शूलं गजस्य उपरि प्रयुक्तवान् आसीत्। अनुजः किं वदेत् इति आतङ्कम् अनुभवति पोदुः।

पशुभिः सह प्रत्यागतः अरुवः स्वकीयं शूलम् गजः अनयत् इति ज्ञात्वा कोपेन– "मम शूलम् आवश्यकम् एव" इति उक्तवान्।

"सहोदर! भवतः शूलं गजेन अरण्यं प्रति नीतम् अस्ति। तत् कथं प्रत्यानयामि?



तत्स्थाने अन्यत् उत्तम शूलम् आनीय ददामि" इति उक्तवान् पोदुः।

"मम तु तदेव शूलम् आवश्यकम्। यथाकथम् अपि आनयतु भवान्। अन्यथा भवन्तं निर्दयं मारयिष्यामि" इति कोपेन उक्तवान् अरुवः।

"अस्तु तर्हि। शूलम् आनेतुं प्रयत्नं करिष्यामि। विना कारणं मरणप्राप्तेः अपेक्षया प्रयत्नं कृत्वा मरणस्य प्राप्तिः वरम्" इति उक्तवान् पोदुः।

अनन्तरदिने सः उषःकाले एव उत्थाय एकं शूलं हस्तेन स्वीकृत्य गृहात् निर्गतवान्। धैर्येण अरण्यं प्रविष्टवान् च। अरण्यस्य अन्तर्भागः शीतलः आसीत्। मध्याह्ने अपि सूर्यप्रकाशः भूमिं न प्राप्नोति स्म। अरण्यमृगाणां गमनागमनेन निर्मितेन अस्पष्टेन मार्गेण सः अग्रे गतवान्। सायंपर्यन्तम् एवं गतं चेदपि तेन गजसमूहः कुत्रापि न दृष्टः।

अन्धकारप्रसारानन्तरं सः अग्रे प्रयाणं कर्तुम् आशक्तः सन् एकस्य महावृक्षस्य मूलं गतवान्।

तत्र उपविश्य आत्मना आनीताः रोटिकाः खादित्वा तत्रैव शयनं कृतवान्। प्रातःकाले उत्थितः सः पुनः प्रयाणम् अनुवर्तितवान्। ततः बहुदूरं गमनानन्तरं सः वृक्षाणां मध्ये स्थितम् एकं प्राचीनं कुटीरं दृष्टवान्।

कुटीरतः धूमः निर्गच्छन् आसीत्। पोदुः कुटीरं पश्यन् तत्रैव स्थितवान्।

क्षणकालानन्तरं काचित् वृद्धा परशुं स्वीकृत्य कुटीरात् बहिः आगतवती। तत्रस्थं काष्ठखण्डं परशुना विदारयितुं प्रयतमाना सा– "हा हन्त! अस्मिन् अन्तिमे वयसि साहाय्यकाभावात् एतादृशं कष्टम् अनुभोक्तव्यम् आपतितं मया" इति स्वगतम् उक्तवती।

तदा पोदुः तस्याः समीपं गत्वा– "अम्ब! अहम् एतत् विदारयामि" इति उक्त्वा तस्याः हस्ततः परशुं स्वीकृतवान्। अनायासेन काष्ठानि विदारयन् राशिं कृतवान्।

एतत् दृष्ट्वा हसन्ती वृद्धा पृष्टवती–

"अये बलशालिन्! मनुष्यवसतिं परित्यज्य निर्मानुषम् एतत् अरण्यं किमर्थं प्रविष्टवान् भो:?" इति।

पोदुः आत्मनः विचारं सविस्तरम् उक्तवान्। तदा सा वृद्धा उक्तवती– "एतादृशस्य कार्यस्य निमित्तं एतावत्पर्यन्तं भवान् आगतवान् इति तु साहसकार्यम् एव। अहं भवतः साहाय्यं कर्तुं शक्नोमि वा न वा इति केषुचित् एव दिनेषु वदामि। तावत्पर्यन्तं मम साहाय्यं कुर्वन् तिष्ठतु भवान्" इति।

अनन्योपायः पोदुः मासं यावत् तया सह स्थितवान्। आदिनं तेन काष्ठच्छेदनं करणीयं भवति स्म।



किन्तु सा वृद्धा तस्य कार्ये कमपि दोषं पश्यन्ती तं पुनः पुनः निन्दति स्म। अप्रयोजकः भवान् इति, अलसः भवान् इति च सा वदति। तथापि पोदुः प्रतिवचनं किमपि अकथयन्, कोपम् अपि अप्रदर्शयन् मौनं तिष्ठति स्म।

एकदा सा वृद्धा तं स्वसमीपम् आहूय पार्श्वे उपवेश्य– "वत्स! एतावन्ति दिनानि व्यर्थं यापितानि इति मा भावयतु। धैर्यं, सहना, सौजन्यं च यस्य भवति स एव गजसमूहसमीपं गत्वा कार्यं साधयित्वा प्रत्यागन्तुं शक्नोति। ते गुणाः भवति सन्ति वा न वा परीक्षितुम् अहं किञ्चित् कठोरं व्यवहृतवती। तदस्तु, भवता एकः गजः शूलप्रयोगेण पीडितः अस्ति। गजः वैरं कदापि न विस्मरति। अतः भवतः साहाय्यार्थम् एकं वस्तु ददामि" इति उक्त्वा एकं मणिं दत्तवती।

अनन्तरदिने सा एकं मार्गं प्रदर्श्य– "एतेन मार्गेण भवता गतं चेत् गजवसतिः प्राप्यते" इति सूचितवती।

तस्याः मार्गदर्शनानुसारं गतः पोदुः चतसृणां घण्टानां प्रयाणस्य अनन्तरं गजवसतिं दृष्टवान्। विशाले अङ्गणसदृशे प्रदेशे ते निवसन्ति स्म। तम् अङ्गणप्रदेशं परितः वृक्षाः परस्परसंलग्नाः प्रवृद्धाः आसन्।

अतः स च प्रदेशः दुर्गेण आवृतं नगरम् इव दृश्यते स्म।

तस्य दुर्गसदृशस्य वृक्षावरणस्य अन्तः



सहस्रशः गजाः आसन्। तेषां मध्ये कश्चन उन्नतः पर्वताकारकः वृद्धः गजः दृश्यते स्म। तं गजं दृष्ट्वा पोदुः चिन्तितवान्– 'प्रायः एषः एतेषां गजानां नायकः स्यात्' इति।

पोदुः वृक्षान् आरुह्य अपरस्मिन् पार्श्वे अवतीर्य नमस्कारभङ्ग्या मन्दगत्या अग्रे गच्छन् गजस्य पुरतः विनयेन स्थितवान्।

गजराजः पोदुं दृष्ट्वा शिरः चालयन् किमपि उक्तवान् इव। 'भवान् किमर्थम् अत्र आगतवान् इति गजराजः मां पृच्छन् अस्ति' इति तस्य अर्थं कल्पितवान् पोदुः।

सर्वे गजाः इदानीं पोदुम् आश्चर्येण पश्यन्तः आसन्। पोदुः धैर्येण शिरः उन्नीय उच्चैः उक्तवान्– "अये गजमित्राणि! भवत्सु केचन मम क्षेत्रम् आहारार्थं यदा आगतवन्तः तदा अहं निर्दयव्यवहारं प्रदर्शितवान्। मम अग्रजस्य शूलेन भवत्सु अन्यतमं गजं प्रहृतवान्। एतस्य अकार्यस्य निमित्तम् अहं क्षमां प्रार्थये। किन्तु इदानीं तत् शूलम् अत्यावश्यकम्। यतः तत् मम सहोदरस्य। तत् न नयामि चेत् अनुजः मां मारयिष्यति। भवन्तः कृपया तत् शूलं यच्छन्ति चेत् बराकः अहं उज्जीवितः भविष्यामि। यदि शूलं दातुं न इच्छन्ति तर्हि भवन्तः माम् अत्रैव मारयन्तु। अत्रैव सन्तोषेण मरणं प्राप्नोमि" इति।

किञ्चित्कालपर्यन्तं गजानां काऽपि प्रतिक्रिया न आसीत्। अनन्तरं गजराजः कमपि ध्वनिम् अकरोत्। अन्ये गजाः अपि क्षीणध्वनिम् उत्पादितवन्तः। द्वौ गजौ पोदुं किञ्चिद्दूरं नीत्वा वृक्षस्य च्छायायां स्थापितवन्तौ।

गजराजस्य पुरतः गजानां चर्चा आरब्धा। सा तु चर्चा सुदीर्घा। चर्चायाः मध्ये घीङ्काराः पुनः पुनः श्रूयन्ते स्म। अन्ते चर्चा समाप्ता इव दृष्टा। गजराजः कमपि निर्णयं श्रावयन् अस्ति इव।

अनन्तरं गजाः पोदुम् अपरस्य वृक्षस्य समीपं नीतवन्तः। तत्र बहूनि शूलायुधानि आसन्।

आत्मना प्रयुक्तं शूलम् अन्विष्य स्वीकृत्य पोदुः गजराजं नमस्कृतवान्।

जीवदानं यत् कृतं तदर्थं कृतज्ञतावचनानि उक्तवान्। गजराजस्य अनुज्ञां प्राप्य ततः निर्गतवान् च।

प्रत्यागमनसमये मार्गभ्रंशात् इति भाति, पोदुः वृद्धायाः कुटीरं द्रष्टुं न शक्तवान्। तया दत्तः मणिः तस्यैव वशे अतिष्ठत्। दिनत्रयस्य प्रयाणस्य अनन्तरं पोदुः गृहं प्रत्यागतवान्।

स्वस्य शूलस्य प्रतिप्राप्त्या अरुवः नितरां सन्तुष्टः। तस्य आनयने आत्मना अनुभूतं क्लेशं श्रमं च विस्तरेण निवेदितवान् पोदुः। आत्मनः समीपे स्थितं नीलमणिम् अपि प्रदर्शितवान् सः। सर्वे तं मणिं दृष्ट्वा आश्चर्यं सन्तोषं च प्रकटितवन्तः। एवं दर्शनसमये स च मणिः बालानां हस्तम् अपि गतः। अज्ञानवशात् अरुवस्य कनिष्ठः पुत्रः तं मणिं गीर्णवान् एव।

इदानीं सन्तोषमयं वातावरणं कलुषितं जातम्। पोदुपत्नी तं बालं सम्यक् ताडितवती। एतेन कुपिता अरुवस्य पत्नी अग्रजां सम्यक् निन्दितवती। पक्षद्वयं जातम्। कलहः प्रवृद्धः। अन्ते अरुवम् उक्तवान् पोदुः– "सहोदर! उपयुक्तं शूलं न आनीतं चेत् भवन्तं मारयिष्यामि इति माम् उक्तवान् आसीत् खलु भवान्। प्राणान् पणीकृत्य अहं कथञ्चित् तं शूलं प्रत्यानीतवान्। इदानीं भवतः पुत्रः मम मन्त्रशक्तियुतं मणिं गीर्णवान् अस्ति। इदानीं किं करणीयम् इति भवान् एव वदतु" इति।

"जातिवैरिणः शुनक-मार्जाराः एकत्र निवासं कर्तुम् अर्हन्ति। व्याघ्र-हरिणाः अपि सहैव निवसेयुः। किन्तु सहोदराः एकत्र सकुटुम्बं स्थातुं न अर्हन्ति। एतत् तु ज्येष्ठानाम् अनुभवसिद्धं वचनम्। अतः अहम् अन्यत्र गृहं निर्माय निवासं करिष्यामि" इति उक्तवान् अरुवः।

"तथैव करोतु। मणिं गीर्णवन्तं भवतः पुत्रं मह्यम् अर्पयित्वा गच्छतु" इति सूचितवान् पोदुः।

अरुवः एतत् अङ्गीकृत्य पुत्रं पोदुगृहे एव परित्यज्य सकुटुम्बम् अन्यत्र गतवान्।





# बिम्बप्रतिबिम्बम्

अमरपुरं किञ्चन विशालं राज्यम्। एतत् राज्यं विवेकः नाम राजा पालयति स्म। सः प्रतिदिनं प्रातः सायं च चन्द्रशालायां मन्दम् इतस्ततः सञ्चरन् सूर्योदयस्य सूर्यास्तस्य च शोभां पश्यन् सन्तोषम् अनुभवति। एतादृशेन व्यवहारेण तदीयं मनः सदा निर्मलं तिष्ठति स्म।

प्रतिदिनं प्रातः काष्ठविक्रयिकः कश्चन राजप्रासादस्य पुरतः अरण्यं गच्छति, सायं च काष्ठं शिरसि आरोप्य तेनैव मार्गेण स्वगृहं प्रतिगच्छति स्म। एतस्य काष्ठविक्रयिकस्य गमनागमनं महाराजः प्रतिदिनं पश्यति स्म।

प्रातः यदा तं पश्यति तदा महाराजस्य मनसि एवं विचारः आगच्छति स्म— "हा हन्त! नितरां दरिद्रः स्यात् एषः। अस्थिपञ्जरमात्रं दृश्यते! महान्तं परिश्रमं विना एतस्य जीवननिर्वहणं न भवति इति भाति" इति। किन्तु सायङ्काले यदा सः काष्ठविक्रयिकः काष्ठानि शिरसि आरोप्य अरण्यतः प्रत्यागच्छन् भवति तदा महाराजस्य मनसि भासते स्म— "महाधूर्तः एषः! एतस्य सजीवदहनं कृतं चेदपि न दोषः" इति।

एकस्य एव पुरुषस्य दर्शनेन प्रातः एका भावना सायं च अपरा भावना कुतः आगच्छति इति न जानाति महाराजः। तत्रापि सायं तद्विषये निष्कारणं कोपः किमर्थम् इति तु निगूढम् एव। अन्ते महाराजः मन्त्रिणम् आहूय काष्ठविक्रयिकस्य दर्शनेन स्वस्मिन् जायमानं परस्परविरुद्धं भावनाद्वयम् अपि उक्त्वा— "एतस्य किं कारणम् इति ज्ञातुम् इच्छामि" इति उक्तवान्। दिनत्रयाभ्यन्तरे ज्ञात्वा निवेदयिष्यामि इति उक्तवान् मन्त्री।

अनन्तरदिने मन्त्री निर्धनस्य वेषं धृत्वा तं

काष्ठविक्रयिकम् अनुसृतवान्। अरण्ये तेन क्रियमाणं परिश्रमं स्वयं दृष्टवान्। सायं तेन सह एव प्रत्यागतवान् च।

एतावता मन्त्रिणा ज्ञातं यत् काष्ठविक्रयिकस्य दर्शनेन महाराजस्य मनसि किमर्थम् अनुकम्पः उत्पद्यते इति। इतःपरं कोपस्य कारणं ज्ञातव्यम् अस्ति मन्त्रिणा।

अनन्तरदिने मन्त्री संन्यासिनः वेषं धृत्वा तस्य काष्ठविक्रयिकस्य गृहं गतवान्। तत्समये काष्ठविक्रयिकः काष्ठसङ्ग्रहार्थम् अरण्यं गतवान् आसीत्।

काष्ठविक्रयिकस्य पत्नी तं भक्त्या अन्तः आहूय सत्कृतवती। तावता मन्त्रिणा श्रीगन्धस्य तीव्रगन्धः आघ्रातः। सः ताम् अनुकम्पयुक्तेन स्वरेण पृष्टवान्– "किम् अम्ब! गृहे श्रीगन्धकाष्ठानि बहूनि सन्ति इति भाति। किं तानि कोऽपि न क्रेष्यति? श्रीगन्धकाष्ठस्य सङ्ग्रहे स्थिते अपि एतत् दारिद्र्यं किमर्थम्?" इति।

तदा काष्ठविक्रयिकस्य पत्नी उक्तवती– "श्रीमन्! वयं तु जन्मना दरिद्राः। मम पतिः अरण्ये काष्ठसङ्ग्रहणसमये कदाचित् श्रीगन्धकाष्ठम् अपि प्राप्नोति। एवं प्राप्तानि श्रीगन्धकाष्ठानि एकत्र सङ्गृहीतानि अस्माभिः। महाराजः वा अन्यः महापुरुषः वा यदि दिवं गच्छेत् तर्हि तस्य दहनार्थं श्रीगन्धकाष्ठखण्डाः उपयुज्यन्ते खलु? तादृशे सन्दर्भे यत् मूल्यं वदामः तेनैव मूल्येन विक्रयणं भविष्यति। अतः एव एतानि सङ्गृहीतानि। तथा विक्रयणं भवति चेत्



आग्रमं जीवनं निश्चिन्तं भवेत्" इति।

इदानीं मन्त्रिणा महाराजस्य कोपस्य कारणम् अपि ज्ञातम्। मन्त्री ततः निर्गत्य स्वगृहं गतवान्। अनन्तरदिने यथापूर्वं राजसभायाम् उपस्थितः अभवत्।

तदा महाराजः मन्त्रिणं पृष्टवान्– "काष्ठविक्रयिकस्य विषये किमपि ज्ञातं वा?" इति।

"आं, महाराज! सर्वं ज्ञातम्। किन्तु भवान् 'तं काष्ठविक्रयिकं न दण्डयिष्यामि' इति वचनं ददाति चेत् सर्वं वदिष्यामि। यतः मया उच्यमानः मनःसम्बन्धी विषयः। शरीरदण्डनेन तु किमपि प्रयोजनं न भवति" इति उक्तवान् मन्त्री।

राज्ञः अभयदानस्य अनन्तरं मन्त्री उक्तवान्– "महाराज! प्रातः काष्ठविक्रयिकः अरण्यं गच्छति। अद्य उदरनिर्वहणं कथं, कियद्दूरं गन्तव्यं भवेत् इत्येवं तस्य मनसि भावनाः भवन्ति। तादृशी तदीया मनःस्थितिः भवति अनुकम्पं जनयति" इति।

अनन्तरं काष्ठविक्रयिकस्य गृहे सङ्गृहीतस्य श्रीगन्धस्य विषयम् उक्त्वा मन्त्री पुनः उक्तवान्– "सायं प्रत्यागमनसमये सः श्रीगन्धविषये चिन्तयति। महाराजः मृतः चेत् मया विशेषलाभः प्राप्येत इति तस्य विचारः। राजा अल्पेन कालेन न मृतः चेत् जीवननिर्वहणार्थं श्रीगन्धकाष्ठस्य विक्रयणम् अपि करणीयं भवेत् इति तस्य आतङ्कः। एतत्कारणतः भवति कोपः उद्भवति। तस्य भवतः च भावौ बिम्बप्रतिबिम्बभावेन स्तः। अतः एवं भवति" इति।

'दारिद्र्यकारणतः सः मम मरणम् इच्छति। यदि दारिद्र्यम् अपगच्छेत् तर्हि सोऽपि दीर्घायुष्यम् आशंसेत्' इति आलोच्य महाराजः तम् आहूय– "भवतः परिश्रमयुक्तं जीवनं दृष्ट्वा अहं सन्तुष्टः अस्मि। तदर्थम् एतत् पारितोषिकं स्वीकरोतु" इति उक्त्वा प्रभूतं धनं दत्तवान्। ततः आरभ्य महाराजः तद्विषये कोपं न प्राप्नोति स्म।



## महाकायः जलचरः

अकशेरुकेषु अतिभारयुतः प्राणी नाम – अट्लाण्टिक् जयण्ट् स्क्वड्। एते ५५ द्वादशाङ्गुलदीर्घाः २ टन् भारयुताः च भवितुम् अर्हन्ति इति प्रमाणैः ज्ञायते। एतदपेक्षया अपि अधिकं विशालाः अपि भवितुम् अर्हन्ति ते। १७५ द्वादशाङ्गुलदीर्घः स्क्वड् दृष्टः इति कथयितारः अपि सन्ति केचन। एतेषां प्राणिनां नेत्राणि अतिविशालानि भवन्ति। कदाचित् नेत्रस्य व्यासः १५ अङ्गुलमितः अपि भवेत्। तन्नाम पादकन्दुकस्य अपेक्षया अपि द्विगुणितं वैशाल्यम्! एतेषु प्राणिषु नाड्यः अधिकसङ्ख्यया भवन्ति। एतेषां नाड्यः मानवस्य नाडीनाम् अपेक्षया ५०० गुणितं स्थूलाः।

एतेषां जलचराणां प्रधानशत्रवः तिमिङ्गिलाः। तिमिङ्गिलानां शरीरे स्क्वडजलचरैः कृताः १७ अङ्गुलविशालाः व्रणाः दृष्टाः सन्ति!



# 'शीघ्रं खाद्यं ददातु

| | | |
|---|---|---|
| पुत्रः – | अम्ब! खादितुं किमपि ददातु। शीघ्रम् ....। | Mummy, give me something to eat. Quickly please... |
| माता – | का त्वरा भवतः? प्रथमं हस्तौ पादौ च प्रक्षाल्य आगच्छतु। वस्त्रपरिवर्तनम् अपि करोतु। तावता खाद्यं सिद्धं करोमि। | Why are you in such hurry? Go, wash your hands and feet first. Also change your clothes and come. I will keep your food ready. |
| पु – | पादौ प्रक्षाल्य एव अन्तः आगतवान् अस्मि अम्ब! | I came in only after a wash, Mummy! Give me food quickly. |
| मा – | वस्त्रपरिवर्तनम् एव न कृतवान् किल भोः! समवस्त्रं धृत्वा एव क्रीडनार्थं गच्छति वा? भवान् तथैव गच्छेत् अपि। किन्तु श्वः अहम् एव खलु क्षालने कष्टम् अनुभवामि? गच्छतु, वस्त्रपरिर्तनं कृत्वा आगच्छतु। | You haven't changed your clothes! You want to go out to play in your uniform? You may not mind, but I will have a hard time washing it? Go, change your clothes and come. |
| पु – | क्षणाभ्यन्तरे वस्त्रपरिवर्तनं करोमि। खाद्यं सिद्धं वा? | I will change in no time; but is food ready? |
| मा – | सिद्धम्। स्थालिकायां स्थापितवती अस्मि। सावधानं खादतु। | Yes, it is in the plate. Eat slowly. |
| पु – | अम्ब! अद्य क्षीरं मास्तु मम। तत् सदा अत्युष्णं भवति। | Mummy, I don't want milk today. It is always very hot. |
| मा – | तावत् उष्णं नास्ति भोः। अन्यं चषकम् अपि ददामि। शीतलीकृत्य पिबतु। गृहाभ्यासं कदा करोति? | It is not very hot! I will give you another glass. Cool it down and drink. When will you do your homework? |
| पु – | सप्तवादने आगमिष्यामि अम्ब! तदनन्तरं गृहाभ्यासं करिष्यामि। | I will come back at 7 O' clock Mummy and do homework. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अगस्ट्-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **न रोचते मनागप्याहारः।**

द्वितीयचित्रम् - **निवार्यते साध्वसं, क्रियतां विहारः।।**

प्रेषिका - सौ ललिता बाई आर् जोशी, शास्त्रीवाडा, भगतसिंगमार्गः, धारवाड-१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्कनी - | Pencil. | तूणीरः - | Quiver. |
| अनुकम्पः - | Sympathy. | दहनम् - | Burning. |
| अवकरः - | Dust. | दायादः - | Cousin. |
| अश्वशकटः - | Horse-drawn cart (Jutka). | निरूढः - | Was borne. |
| | | पत्रसूची - | Pin. |
| आधिः - | Pawn | पादकन्दुकम् - | Football. |
| आनायितः - | Was summoned. | प्रक्रिया - | Procedure. |
| आरोपयति - | Plants. | प्रभूतम् - | Enough. |
| आलम्ब्य - | Leaning back. | भावः - | Feeling. |
| इन्द्रधनुः - | Rainbow. | यावानलः - | Maize. |
| इष्टिका - | Brick. | रूक्षः - | Rough. |
| उत्खननम् - | Excavation. | वीजितवान् - | Fanned. |
| उत्ताना - | Facing upward. | वेणुः - | Flute. |
| उरः - | Chest. | शयनिका - | Sleeping berth. |
| काष्ठविक्रयिकः - | Firewood vendor. | शयानः - | One who is lying down. |
| कोटरः - | Hollow of a tree. | | |
| क्लिन्नः - | Wet. | शूलम् - | Spear. |
| गीर्णवान् - | Swallowed. | सर्पणम् - | Crawling. |
| तण्डुलः - | Rice. | साक्ष्यम् - | Evidence. |
| तुषः - | Husk. | सूची - | Needle. |

